भगवानाह। यद्येवं भैषज्यं सेवितव्यम्। न शक्यमन्यथा स्वस्थेन भवितुम्। मांसं दातव्यम्। भिक्षवस्तथा] एवानुप्रयच्छन्ति। न खादति। भगवानाह। अक्षिणी पट्टकेन बद्ध्वा दातव्यम्। तैर्दत्तम्। अतिशीघ्रं पट्टको मुक्तः। तेन हस्तौ लिप्तौ दृष्टौ। तेन वान्तम्। भगवानाह। [सद्यो न मोक्तव्यः। अथ चेत् सद्यो मोक्तव्यस्तदा तस्य हस्तौ तदग्रतः सुशुद्धे पा]-नीये स्थापयित्वा पश्चात् पट्टको मोक्तव्यः[1]। स स्वस्थीभूतः। तस्य स एव दोहदः संवृत्तः। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। यदा स्वस्थी[भूतस्तदा एवं शिक्षां समादाय] तत्समवस्थानमाचरितव्यम्। अध्याचरति सातिसारो भवति।

राजगृहे निदानम्। आयुष्मान् पिलिन्दवत्सो यतः प्रव्रजितो बह्वाबाधः। स भिक्षुभिरुच्यते। [स्थविर एवं ते आबाधः। स कथयति। आयुष्मन्तः सततमहं बह्वाबाधः। निर्याणप्रकरणं नास्ति। ते कथयन्ति। स्थविर पुरा किं धृतम्। स कथयति]। भैषज्यं कच्छपुटम्। इदानीं किं न धारयसि। भगवता नानुज्ञातम्। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। [एवं सत्यनुज्ञातम्]। भिक्षूणां भैषज्यं कच्छपुटं धारयितव्यम्। [भिक्षूणां मूलपुष्पगण्डफलभैषज्यानि धारयितव्यानि[2]। ते सर्व]त्र भैषज्यानि कच्छपुटे न दापयन्ति। भगवानाह। फलभैषज्यानि कच्छपुटे स्थापयितव्यानि। मूल-

1 See Tib. 16b, l. 1.  2 See Tib. 17a. l. 1.

पुष्पगण्डभैषज्यानि वरण्डिकां बद्ध्वा नागदन्तके स्था[पयि-तव्यानि। भगवानाह। काले काले शोषयित]व्यानि। ते आतपे शोषयन्ति। निर्वीर्यं भवति। भगवानाह। नातपे शोषयि-तव्यम्। छायायां शोषयन्ति। तथापि पूय्यति। भगवानाह। छायातपे शोषयितव्यम्।

श्रावस्त्यां [निदानम्[1]। यस्मादायुष्मान् रेवतो] यत्र क्वचन कांक्षी तस्य कांक्षारेवतः कांक्षारेवत इति संज्ञा संवृत्ता। स पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्रविष्टः। सोऽनुपूर्वेण गुडशालां गतो यावत्पश्यति कणेन[2] गुडं बध्यमानम्। स कथयति। [भवन्तो मा कणेन गुडं] बन्धत। आर्य अस्ति किंचिदन्यं बन्धं जानासि। नाहमन्यं बन्धं जानामि। अपि तु वयमकाले परिभुंजामः। आर्य काले वाकाले वा परिभुङ्क्ष्व। एषोऽस्य बन्धोऽन्यथा बन्धं न गच्छति। अपरेण समयेन सं[घस्य] [गुडखादनीयं] संपन्नम्। स न खादति। तस्य सार्धंविहार्यन्ते-वासिकाः कथयन्ति। आर्य संघस्य गुडखादनीयं संपन्नं परिभुङ्क्ष्व। स कथयति। भद्रमुखाः सामिषमेतत्। तेऽपि न भुञ्जते। अन्यै-र्भिक्षुभिरुच्यन्ते। आयुष्मन्तः [संघस्य गुडखादनी]यं संपन्नं किं न परिभुञ्जत। ते कथयन्ति। उपाध्यायः कथयति सामिषमेतत्। तैरपि न परिभुक्तम्। महापरिवारः सः। [तैर्न परिभुक्तमिति] यद् भूयसा सर्वसंघेन न परिभुक्तम्। एतत् प्रकरणं भिक्षवो भगवत

1 See Tib. 17b, l. I

2 Tib. 17b, l. 3: འབྲུས་ སྦྱར་དང །

आरो[चयन्ति। भगवानाह]। न लभ्यन्ते नामिषेणामिषकृत्यं कर्तुम्[1]। आगारपरिशुद्धमिति कृत्वा परिभोक्तव्यं नात्र कौकृत्यं करणीयम्।

श्रावस्त्यां निदानम्। अथायुष्मान् रेवतः पूर्वाह्णे निवास्य पात्रचीवरमादाय श्राव[स्त्यां पिण्डाय प्रविष्टः। सोऽनुपूर्वेण वीथीं[2]] गतः। तेन गांधिको दृष्टः सक्तुं स्पृष्ट्वा गुडं स्पृशति। स कथयति। भद्रमुख मा सक्तुं स्पृष्ट्वा गुडं स्पृश। अस्माभिरकाले परिभोक्तव्यम्। स कथयति। आर्य को मम मुहुर्मुहुर्हस्तशौचं ददाति। अपरेण समये[न संघस्य गुडखादनीयं] संपन्नम्। स न परिभुङ्क्ते। सार्धंविहार्यन्तेवासिनः कथयन्ति। आर्य संघस्य गुडखादनीयं सम्पन्नं किं न खादसि। स कथयति। भद्रमुखाः सामिषमेतत्। तैरपि न परिभुक्तम्। ते भिक्षुभिरुच्यन्ते। आयुष्मन्तः संघस्य गुड[खादनीयं संपन्नम्। किं न परिभुङ्क्त]। ते कथयन्ति। उपाध्यायः [कथय]ति सामिषमेतत्। तैरपि न परिभुक्तम्। महापरिवारः सः। तैर्न परिभुक्तमिति यद् भूयसा सर्वसंघेन न परिभुक्तम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न लभ्यन्ते [नामिषेणामिषकृत्यं कर्तुम्। आगार]परिशुद्धमिति कृत्वा परिभोक्तव्यम्। नात्र कौकृत्यं करणीयम्।

1 Tib. 18a, l. 2-3: ཟས་ཀྱིས་ ཟས་ཀྱི་བྱ་བ་མི་བྱེད་པ་ཅི་མི་རྙེད་པས་ འབྱུང་ ཁུང་ཡོངས་སུ་ དག་པས་ ལོངས་ སྤྱད་པར་བྱ་སྟེ།

2 Tib. 18a: l. 3. སྲང་ ཞིག་བྱིན་ པ་དང་།

श्रावस्त्यां निदानम्। आयुष्मतः शारिपुत्रस्य वाय्वाबाधिकं ग्लान्यमुत्पन्नम्। आयुष्मान्महामौद्गल्यायनः संलक्षयति। बहुशो मया आयुष्मतः [शारिपुत्रस्य परिचर्या[1]] कृता न तु कदाचिद्वैद्यः पृष्टः। यत्त्वहमिदानीं वैद्यं पृच्छेयम्। स वैद्यसकाशमुपसंक्रान्तः। भद्रमुख आयुष्मतः शारिपुत्रस्येदं चेदं च ग्लान्यमुत्पन्नं तस्यानुलोमिकभैषज्यमुपदिशेति। स कथयति। आर्य [लवणं सौवीरकं[2] भैषज्यं] भविष्यतीति। तेन सौवीरकं समुपानीतम्। लवणं नास्ति। स लवणं पर्येषितुमारब्धः। आयुष्मता पिलिन्दवत्सेनोक्तः। अस्ति आयुष्मन् मम शृङ्गापुटं लवणं यावज्जीवमधिष्ठितम्। यदि भगवाननुजानीते ददामीति शारिपुत्रेण श्रुतम्। स कथयति। मम मानस आयुष्मान्महामौद्गल्यायन एवं भवति[3]। न लभ्यं कालिकेन यावज्जीविकं परिभोक्तुम्। एतत्प्रकरणमायुष्मान्महामौद्गल्यायनो भगवत आरोचयति। भगवानाह। न लभ्यं मौद्ग[ल्यायन] यच्च कालिकं यच्च यामिकं यच्च साप्ताहिकं यच्च यावज्जीविकमधिष्ठितम्। तत्र मौद्गल्यायन यच्च यामिकं यच्च साप्ताहिकं यच्च यावज्जीविकं तच्चेत्कालिकेन संसृष्टं भवति कालिकसंसृष्टमिति कृत्वा काले परिभोक्तव्यं कालातिक्रान्तं न परिभोक्तव्यम्। यच्च [यामिकं यच्च साप्ताहिकं] यच्च यावज्जीविकं तच्च यामिकेन संसृष्टमिति कृत्वा यामं परिभोक्तव्यं यामाति-

1 See Tib. 18b, l. 5.

2 Salted sour barley gruel.

3 Tib. 19a, l. 2: ཁོ་བོ་འདི་སྙམ་དུ་སེམས་ཏེ།

क्रान्तं न परिभोक्तव्यम्। यच्च साप्ताहिकं यच्च यावज्जीविकं तच्चेत्साप्ताहिकेन संसृष्टं भवति साप्ताहिकसंसृष्टमिति कृत्वा सप्ता[हं परिभोक्तव्यं सप्ताहाति]क्रान्तं न परिभोक्तव्यम्[1]। यत्तु यावज्जीविकं तद्यावज्जीविकं परिभोक्तव्यम्[2]। अन्यथा परिभुञ्जति सातिसारो भवति।

उद्दानम्।

महासेनो मांसमर्शो वातव्याधिश्च पूर्णकः।

.......................................... ॥

बुद्धो भगवान् काशीषु जनपदेषु चारिकां चरन् वाराणसीमनुप्राप्तः। वाराणस्यां विहरति ऋषिवदने मृगदावे। वाराणस्यां महासेनो नाम गृहपतिः प्रतिवसति आढ्यो महाधनो महाभोगः। तस्य [पत्नी महासेना नाम। स] सपत्नीकः श्राद्धो भद्रः कल्याणाशयः। तेन श्रुतम्। भगवान् काशीषु जनपदेषु चारिकां चरन् वाराणसीमनुप्राप्तः। वाराणस्यां विहरति ऋषिवदने मृगदावे इति। श्रुत्वा च पुनरप्येतदभवत्। बहुशो मया भगवन्नन्तर्गृहे उपनिमन्त्रितो न]त्वेव सर्वोपकरणैः प्रवारितः। यत्त्वहमेतर्हि भगवन्तं त्रैमासीं सर्वोपकरणैः प्रवारयेयमिति विदित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः[3]।

1 Ms. adds सप्ताहस्यात्ययान्न परिभोक्तव्यम्।

2 See above, p. iv.

3 See Tib. 20a, l. 3.

Note:

Several leaves of the original ms. are lost. The lost portion corresponds to *Dulva, II*, folios 20a, l. 4 to 244a. l. 6.

अद्राक्षीद् भगवान् दूरादेव नीलनीलां वनराजिम्। दृष्ट्वा च पुनर्वज्रपाणिं यक्षमामन्त्रयते। पश्यसि [त्वं वज्रपाणे नीलनीलामेतां वनराजिम्। पश्यामि भदन्त। एष वज्रपाणे काश्मीरम]ण्डलम्। मम वर्षशतपरिनिर्वृतस्य माध्यन्दिनो नाम भिक्षुर्भविष्यत्यानन्दस्य भिक्षोः सार्धंविहारी। स हुलुटं दुष्टनागं वि[नेष्यति। अथ पर्यङ्कं बद्ध्वा समग्रे काश्मी]रमण्डले शासनं प्रवेशयिष्यति। विपश्यनानुकूलानां शयनासनं यदुत काश्मीरमण्डलम्।

षष्टिग्रामसहस्रा[णि षष्टिग्रामशतानि च।
षष्टिर्ग्रामास्त्रयो ग्रामा ह्येतत् का]श्मीरमण्डलम्॥

भ्रष्टालायाम्[1] ऋषिर्विनीतः आपन्नकश्च यक्षः सपरिवारः। कन्थायां यक्षिणी सपरिवारा विनीता। धान्यपु[रमनुप्राप्तः। धान्यपुरे सेनराजः परमसत्येषु प्रति]ष्ठापितः। नैतरी[2]मनुप्राप्तः। नैतर्यामन्यतमः कुम्भकारः। सोऽतीव शिल्पमदमत्तः। शुष्काणि भाजनानि चक्रादवतारयति। [भगवांस्तस्य विनयकालं ज्ञात्वा कुम्भकारवेषं गृहीत्वा तेन सार्धं] जल्पं कर्तुमारब्धः। त्वं कीदृशानि भाजनानि चक्रादवतारयसि। स कथयति। शुष्काणि। अहमपि शुष्काण्यवतारयामि। समस्त्वं मया। किमे[तद् भङ्गुरेण। अहं दन्तमयान्यपि अवतारयामि। त्वं मत्तः कुशलतरोऽसि। न केवलं दन्तमयानि सुवर्णरौप्यवैडू]र्यस्फटिकमयान्यपि। सोऽभिप्रसन्नः। ततो भगवता कुम्भ-

1 Tib. 244b, l. 5-6: ཡུལ་མ་ཆེས་གྲོང་ན།

2 Tib. 244b, l. 7: ཡུལ་དབང་ལྡན།

कारवेषमन्तर्धाप्य स्ववेषेण स्थित्वा सपरिजनः सत्येषु प्रतिष्ठापितः । शाद्वला[मनुप्राप्तः । शाद्वलायां महायक्षपरिवारः शरणगमन-शिक्षापदेषु प्र]तिष्ठापितः पालितकोटो नागपालकश्च । [नन्दि]वर्धन-मनुप्राप्तः । नन्दिवर्धने भवदेवो राजा सपरिवारः सत्येषु प्रति[ष्ठापितः ससप्तमातङ्गपुत्रो भूपयक्षश्च । तत्राश्वक-पुनर्वसुकौ] नागयोनावुपपन्नौ । द्वादशानां वर्षाणाम[त्ययात् क्षुब्धौ] । तावेव-माहतुः । नावयोर्भगवता धर्मो देशितो येनावां विनिपतितौ नागयो[नौ जातौ । कथं वयमस्य देशनां ज्ञास्यामः । भगवत एतदभवत् । तयोर्महा]नुभावः । स्थानमेतद् विद्यते यत् परि-निर्वृ तस्य मे शासनं भस्म करिष्यत इति विदित्वा येनाश्वकपुन-र्वसुकयोर्भवनं तेनोपसंक्रान्तः । उपसंक्रम्या[श्वकपुनर्वसुकाभ्यां चतुष्पदिको धर्मपर्यायो देशितः । एतस्य] व्याख्यां ज्ञास्यथ । के वयं सद्धर्मस्य ज्ञातार इति विदित्वा तत्रैव निमग्नौ । तयो-रेतदभवत् । देशितोऽस्माकं भगवता धर्मः । अस्माभिस्तु न विज्ञात इ[ति । भगवता तस्मिन्नेव प्रदेशे प्रतिमैका दत्ता । अश्वकपुनर्वसुकौ तत्र] पुनर्निमज्जतः । अद्यापि भगवांस्तिष्ठतीति तस्मिन्नेव प्रदेशे । भगवता नाली उदर्या च यक्षिणी विनीता । कुन्तीनगरमनुप्राप्तः । कुन्तीनगरे [कुन्ती यक्षिणी इति ख्याता क्रोधान्विता चण्डा च प्रतिवसति । कुन्तीनगरस्य ब्राह्मण]गृह-पतीनां जातानि जातान्य[पत्यानि भ]क्षयति । अश्रौषुः कौन्ती-नागरा ब्राह्मणगृहपतयो भगवान् कुन्तीनगरमनुप्राप्तः । [तस्मिन्] प्रदेशे तिष्ठती[ति श्रुत्वा ते सन्निपतिताः कुन्तीनगरान्निर्गताः ।

येन भगवां]स्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। एकान्तनिषण्णानां कौन्तीनागराणां ब्राह्मणगृहपतीनां भगवान् धर्म्यया [कथया पूर्ववद् यावत् संप्रहर्ष्य तूष्णीम्। अथ श्राद्धा ब्राह्मणगृहपतय उ]त्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचन्। अधिवासयत्वस्माकं भगवान् श्वोऽन्तर्गृहे भक्तेन [सार्धं भिक्षुसंघेनेति। अथ भगवन्तं भुक्तवन्तं धौतहस्तमपनीतपात्रं निषण्णं विदित्वा] सौवर्णं भृङ्गारं गृहीत्वा भगवतः पुरतः स्थित्वा याचमान एवं चाह। भगवता ते ते दुष्टनागा दुष्टयक्षा [विनीताः। इयं भदन्त कुन्ती यक्षिणी अस्माकं दीर्घरात्रमसपत्नानां सपत्नी अद्रुग्धानां] द्रोग्ध्री जातानि जातान्यपत्यानि हरति। अहो बत भगवान् कुन्तीं यक्षिणीं विनयेदनुकम्पामुपादायेति। तेन खलु सम[येन कुन्ती यक्षिणी तस्यामेव पर्षदि सन्निषण्णाभूत् सन्निपतिता। तत्र भगवान् यक्षिणीमामन्त्रयते]। श्रुतं ते कुन्ति। श्रुतं मे भगवन्। श्रुतं ते कुन्ति। श्रुतं मे सुगत। विरम त्वमस्मात् पापकादसद्धर्मात्। समयेनाहं भदन्त विरंस्यामि यद्येते ममार्थाय विहारं कारयन्ति। तत्र भगवान् कौन्तीनागरान् ब्राह्मणगृहपतीनामन्त्रयते। [श्रुतं] वो ब्राह्मणगृहपतयः। श्रुतं भगवन्। कथं वोऽत्र भवति। करिष्यामो भगवन्। अथ भगवान् कुन्तीं यक्षिणीं सपरिवारां विनीय प्रक्रान्तः। भगवान् खर्जूरिकामनुप्राप्तः। खर्जूरिकायां बालदारकान् पांसुस्तूपकैः क्रीडतोऽद्राक्षीत्। [भगवान्] बालदारकान् पांसुस्तूपकैः क्रीडतो दृष्ट्वा च

पुनर्वज्रपाणिं यक्षमामन्त्रयते। पश्यसि त्वं वज्रपाणे बालदारकान् पांसुस्तूपकैः क्रीडतः। एवं भदन्त। एष चतुर्वर्षशतपरिनिर्वृतस्य मम वज्रपाणे [कुशानवंश्यः][1] कनिष्को नाम राजा भविष्यति। सोऽस्मिन् प्रदेशे स्तूपं प्रतिष्ठापयति। तस्य कनिष्कस्तूप इति संज्ञा भविष्यति। मयि च परिनिर्वृते बुद्धकार्यं करिष्यति।

ततो भगवान् यावच्चापलालस्य भवनं यावच्च रोहितकमत्रान्तरे सप्तसप्ततिप्राणिशतसहस्राणि विनीय रोहितकमागत्य विहारं प्रविश्य प्रतिसंलीनः। भगवान् सायाह्ने प्रतिसंलयनाद् व्युत्थायायुष्मन्तमानन्दमामन्त्रयते। आगमयानन्द येनादिराज्यमिति।

अथायुष्मानानन्दो भगवन्तमिदमवोचत। पूर्वं भदन्त भगवानेवमाह। उत्तरापथे [नागराजमपलालं वि]नेष्यामः। पश्चानुशंसा उत्तरापथेनेति। अथ च पुनर्भगवानाह। आगमयानन्द येनादिराज्यमिति। तत् कथम्। भगवानाह। गतोऽहमानन्द वज्रपाणिसहीय उत्तरापथम्। व्याकृतं तमसावनं यावद्। व्याकृतं वालुकास्तूपम्। गतोऽहमानन्द यावच्च रोहितकं यावच्चापलालस्य नागराजस्य भुवनम्। अत्रान्तरे तथागतेन राज्ञा सप्तसप्ततिप्राणिशतसहस्राणि विनीतानि। पश्चादीनवा उत्तरापथे स्थाणुकण्टकद्रुमपाषाणशर्करश्चण्डकुक्कुरो दुष्ठुलसमुदाचारो मातृग्रामः[2]।

1 Tib. 247b, l. 2: ཀུ་ཤ་ནའི་ རིགས།

2 Tib. 248a, l. 5-6.

उद्दानम्

आदिराज्यं च भद्राश्वो मथुरा ओतला च ।

आरामवैरंभ्य अयोध्या च नदी गङ्गा प्रेता वेलामो भवति पश्चिमः ।।

अथ भगवाञ्छूरसेनेषु जनपदेषु चारिकां चरन्नादिराज्यमनुप्राप्तः । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते । अस्मिन्नानन्द [प्रदेशे] महासम्मतो राजा प्रथमतो राज्याभिषेकेनाभिषिक्तः । अभिषिक्तोऽयं च राज्ञामादिरतोऽस्यादिराज्यः आदिराज्य इति संज्ञा संवृत्ता ।

भद्राश्वमनुप्राप्तः । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते । अस्मिन्नानन्द प्रदेशे राज्ञो महासम्मतस्य भद्रमश्वरत्नं प्रादुर्भूतं यतोऽस्य भद्राश्वो भद्राश्व इति संज्ञा संवृत्ता ।

तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते । आगमयानन्द येन मथुरा इति । एवं भदन्त इत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत् । अथ भगवान् मथुरां संप्रस्थितः । दूरादेव नीलनीलां [भगवान्] वनराजिं दृष्ट्वा पुन[रायुष्मन्तमानन्द]मामन्त्रयते । पश्यसि त्वमानन्द एतां नीलनीलां वनराजिम् । एवं भदन्त । एष आनन्द उरमुण्डो नाम पर्वतः । अत्र मथुरायां नटो भटश्च द्वौ भ्रातरौ मम वर्ष[शतपरिनिर्वृ त]स्य[1] विहारं प्रतिष्ठापयतः । ततस्तस्य नटभटिक इति संज्ञा भविष्यति । [2]अग्रं च भविष्यति

1 Tib. 248a. l. 7: ང་ཡོང་སྐུ་མྱ་ངན་ལས་འདས་ནས་ལོ་བརྒྱ་ལོན་པ་དང །

2 I. e. विहारं अग्रयम

शमथविपश्यनानुकूलानां शयना[स]नानाम्। अद्यानन्द मथुरायां गुप्तो नाम गान्धिकदारको भविष्यति। तस्य पुत्रः उपगुप्तो नाम भविष्यति[1] [अलक्षण]को बुद्धः। स मम वर्षोषितस्य परिनिर्वृतस्य शासने प्रव्रज्य बुद्धकार्यं करिष्यति। माध्यन्दिनो नाम्ना आनन्दस्य भिक्षोः सार्धंविहारी। स उपगुप्तं प्रव्राजयिष्यति[2]। उपगुप्तः पश्चिमको भविष्यति [अववादकानाम्[3]। वृक्ष]वाटिकायां[4] गुहा भविष्यति। दैर्घ्येणाष्टादशहस्ता। विस्तारेण द्वादश। उच्छ्रायेण सप्त। ये ये तस्याववादे अर्हत्त्वं साक्षात्करिष्यन्ति ते ते चतुरङ्गुलमात्रां कटिकां[5] तस्यां गुहायां प्रक्षेप्स्यन्ते। [यदा सा गुहा पूर्णा] भविष्यति अर्हत्कटिकाभिस्तदा उपगुप्तः परिनिर्वास्यति। परिनिर्वृतं चैनं ताभिरेवार्हत्कटिकाभिः समेत्य ते ध्मापयिष्यन्ति। भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं परिपप्रच्छुः। भदन्त भगवता आयुष्मानुपगुप्तोऽनागत एव बहुजनानुकम्पी व्याकृत इति। भगवानाह। न भिक्षव एतर्हि यथासावतीतेऽप्यध्वनि बहुजनहिताय प्रतिपन्नस्तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये।

भूतपूर्वं भिक्षवः अस्यैव उरुमुण्डस्य पर्वतस्य त्रिषु पार्श्वेषु प्रत्येकबुद्धा ऋषयो मर्कटाश्च प्रतिवसन्ति। एकस्मिन् पार्श्वे पञ्च

1 Tib. 249a, l. 3; cf. *Divyāvadāna*, pp. 349, 385.

2 *Ibid.* p. 349: शाणकावासी...उपगुप्तं च प्रव्राजयिष्यति।

3 Tib. 249a, l. 4: གདམས་ངག་སྟོན་པ་རྣམས་ཀྱི་ཕྱི་མ།

4 Tib. 249a, l. 5: གར་མཁན་དབའ་བོ་དེ་ལ།

5 Ibid. ཐུར་མ་=शलाका

प्रत्येकबुद्धशतानि द्वितीये पञ्च ऋषिशतानि तृतीये पञ्च मर्कटशतानि। आचरितं मर्कटयूथपतेर्जातं जातं मर्कटशावकं प्रघातयति। ततस्ता मर्कट्यः शावकशोकाभिभूताः परस्परं सञ्जल्पं कर्तुमारब्धाः। शृण्वन्तु भवन्त्यो मर्कट्यः। अयमस्माकं यूथपतिर्जातं जातं शावकं प्रघातयति। तदुपायसंविधानं कर्तव्यम्। या अस्माकं मर्कटी आपन्नसत्त्वा भवति तया यूथपतेर्नारोचयितव्यमिति। यावदपरेण समयेनान्यतमा मर्कटी आपन्नसत्त्वा संवृत्ता। सा ताभिः प्रतिगुप्ते प्रदेशे गोपायित्वा मूलफलैरुपस्थापिता। मर्कटशावको जातः। सोऽपि ताभिः प्रतिगुप्ते प्रदेशे स्थापितः पोषितः संवर्धितः। स यदा महान् संवृत्तस्तदा तेनासौ यूथपतिः स्वयूथात्प्रच्यावितः। उरुमुण्डपर्वते इतश्चामुतश्च परिभ्रमितुमारब्धः। तेन परिभ्रमता प्रत्येकबुद्धानां शब्दः श्रुतः। स तेषां सकाशं गतः। यदा विश्वस्तसंवासः [1]संवृत्तस्तदा तेषां मूलपत्रपुष्पफलदन्तकाष्ठैरुपसंहारं करोति। तेऽपि तस्य पात्रशेषं छोरयन्ति। आचरितं तेषां प्रत्येकबुद्धानां भुक्त्वा भुक्त्वा पर्यङ्के निषीदन्ति। सोऽपि मर्कटस्तेषामीर्यापथं दृष्ट्वा पर्यङ्केन निषीदति। यावदपरेण समयेन तेषां प्रत्येकबुद्धानामेतदभवत्। यदस्माभिरनेन क्राथकायेन[2] प्राप्तव्यम्। प्राप्तं तद् यन्नु वयं शान्तं निर्वाणधातुं प्रविशेम इति। ततस्ते ज्वलनतपनवर्षणविद्योतनप्रातिहार्याणि कृत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृताः। तेषां व्युत्थानकालः। तस्मिन्

1 Ms. स्मृतः तदा    2 Cf. *Divyā.*, p. 372: क्राथयित्वा

नोत्तिष्ठन्त इति। स मर्कटस्तानपश्यन् धृतिं न लभते। यावदसौ मर्कटो गुहां प्रविश्य तेषां प्रत्येकबुद्धानां चीवराणि विकोपयितुमारब्धः। या[1] देवता तस्यां गुहायामध्युषिता तस्या एतदभवत्। मा हैवायं शाखामृगः प्रत्येकबुद्धचीवराणि विकोपयिष्यतीति द्वारं महत्या शिलया पिधायावस्थिता। ततोऽसौ मर्कटः शोचित्वा क्लमित्वा परिदेवित्वा प्रक्रान्तः। उरुमुण्डपर्वते समन्तात्परिक्रामति।[2] [अन]भिरतित्वाद् धृतिं न लभमानोऽवहितश्रोत्रो मनुष्यशब्दमाकांक्षति। तेन तेषामृषीणां वाक्प्रव्याहारशब्दः श्रुतः। स मार्गप्रनष्ट इवाध्वगस्त्वरितत्वरितं तेषां सकाशमुपसंक्रान्तः। तेन ऋषयः कष्टानि तपांसि तप्यन्ते। केचिदूर्ध्वहस्तकास्तिष्ठन्ति। केचिदेकेन पादेन। केचित्पञ्चतपस्तप्यन्ते। यदासौ मर्कटस्तैः सार्धं विश्वस्तसंवासः संवृत्तस्तदा तेषामृषीणां मूलपत्रपुष्पफलदन्तकाष्ठैरुपसंहारं करोति। तेऽपि तस्य भैक्षशेषं छोरयन्ति। स तेषामीर्यापथं व्याकोप्य प्रत्येकबुद्धेर्यापथं देशयति। तत्र ये ऊर्ध्वहस्तकास्तेषां हस्तानधः कृत्वा रिच्छटाशब्दं च कृत्वा पुरस्तात्पर्यङ्कं बद्ध्वावतिष्ठते। ये पञ्चतपस्तप्यन्ते तेषामग्निं निर्वाप्य रिच्छटाशब्दं कृत्वा पुरस्तात्पर्यङ्केनावतिष्ठते। ततस्तैः ऋषिभिरववादकस्यारोचितम्। उपाध्याय एष शाखामृगोऽस्माकं तपोविघ्नं करोति। तैस्तस्य विस्तरेणारोचितम्। स कथयति। भवन्तः स्मृतिमन्तो ह्येते शाखामृगा भवन्ति। नूनमनेन ईर्यापथेन के

1 Ms. यथा

2 Tib. 250b, l. 5: མི་རྣམས་འདོད་པས་མི་དགའ་བར་གྱུར་ཏེ།

ऋषयोऽनेन दृष्टा भविष्यन्ति। यूयमपि यथास्थापितं पर्यङ्कं बद्ध्वा निषीदथ। ते तथैव पर्यङ्कं बद्ध्वा निषण्णाः। तेषां पूर्वकानि कुशलमूलान्यामुखीभूतानि। तैरना[चा]र्यकैरनुपाध्यायकैर्ज्ञानेन सप्तत्रिंशद्बोधिपक्षधर्मानुत्पाद्य प्रत्येकबोधिः [साक्षात्कृत][1]स्तेषां मर्कटस्यान्तिके धर्मान्वयः प्रसाद उत्पन्नः। ते यानि नवशस्यानि नवफलानि नवर्तुकानि जनपदात् पिण्डपातं प्रतिलभते तानि तस्मै प्रथमतो दत्त्वा तत आत्मनः परिभुञ्जते। तावदपरेण समयेन [स मर्कटः] कालगतः। ततस्तैः प्रत्येकबुद्धैर्नानादिग्देशाधिष्ठानेषु गन्धकाष्टानि समादाप्य सर्वगन्धकाष्ठैश्चितां चित्वा ध्मापितः।

किं मन्यध्वे भिक्षवः। योऽसौ प्रत्येकबुद्धैः संपोषितो मर्कटः स एवासावुपगुप्तः। तदाप्यसौ बहुजनहिताय प्रतिपन्नः एतर्ह्यप्यसौ मया बहुजनहितानुकम्पी व्याकृत इति।

अथ भगवाञ्छूरसेनेषु जनपदेषु चारिकां चरन् मथुरामनुप्राप्तः। अश्रौषुर्माथुरा ब्राह्मणाः श्रमणो गौतमो मथुरामनुप्राप्तः। सोऽत्यर्थं चातुर्वर्णविशुद्धिं रोचयति दीपयति प्रज्ञपयति प्रस्थापयति विरुजति विवृणोति उत्तानीकरोति देशयति। यद्यसौ मथुरां प्रवेक्ष्यति अस्माकं लाभान्तरायो भविष्यति। स चासत्कारभीतः श्रूयते। यदि तस्य कश्चिदसत्कारं कुर्यादेवमसौ मथुरां न प्रविशेत इति चास्य नीचपुरुषोऽसत्कारं [कुर्यात्]

1 Tib. 251b, l. 2: མངོན་སུམ་དུ་བྱས།

प्रवेक्ष्यति न चित्रीकरिष्यति[1] । यद्यस्य प्रधानपुरुषः कश्चिदसत्कारं कुर्याच्छोभनं स्यात् । तत्कोऽस्माकं प्रधानपुरुषः । तेन खलु समयेन मथुरायां नीलभूतिर्नाम ब्राह्मणो वेदवेदाङ्गपारगः स्ववादोद्द्योतकः परवादनिग्रहसमर्थः । तस्य वाक् सत्यानुपरिवर्तिनी । ततो माथुरा ब्राह्मणाः सङ्गम्य समागम्य नीलभूतेः सकाशमुपसंक्रान्ताः । उपाध्याय श्रूयते श्रमणो गौतम इहागत इति । सोऽत्यर्थं चातुर्वर्ण्यविशुद्धिं पूर्ववद्यावत्संप्रकाशयति । स चासत्कारभीतः श्रूयते । यदि तस्य कश्चिदसत्कारं कुर्यादेवमसौ मथुरां न प्रवेक्ष्यति । यदि चास्य नीचपुरुषोऽसत्कारं करिष्यति न चित्रीकरिष्यति । यद्यस्य प्रधानपुरुषः कश्चिदसत्कारं कुर्याच्छोभनं स्यात् । ततोऽस्माकं [कः] प्रधानपुरुषः ऋते उपाध्यायात् । त्वमस्यासत्कारं कुरु वाग्दण्डैराक्रोशय[2] । नीलभूतिः कथयति । भवन्तो ममेयं जिह्वा सत्यानुप्रवर्तिनी । यद्याक्रोशार्हो भविष्यति आक्रोक्ष्यामि । अथ स्तवार्हस्तोष्यामीति । ततो नीलभूतिर्ब्राह्मणो वृद्धवृद्धैर्मथुरानिवासिभिर्ब्राह्मणैः संपुरस्कृतो येन भगवांस्तेनोपसंक्रान्तः । अद्राक्षीन्नीलभूतिर्ब्राह्मणो भगवन्तं दूरादेव द्वात्रिंशता महापुरुषलक्षणैः समलंकृतम् अशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्योमप्रभालङ्कृतं सूर्यसहस्रा-

1 Tib. 252a, l. 4: གལ་ཏེ་དེ་ལ་མི་སྨད་རིགས་ཀྱིས་བཀུར་བསྟི་མ་ཡིན་པར་བྱས་ན་ངོ་མཚར་དུ་མ་ཡིན་པ་བྱས་ན་ངོ་མཚར་དུ་མི་འཛིན་གྱི །

2 Tib. 252b. l. 5: ཚིག་གིས་ཀྱུ་ལྕུག་གི་སྦྲོ་བར་གསོལ །

तिरेकप्रभं जंगममिव रत्नपर्वतं समन्ततो भद्रकमन्यतरं वृक्षमूलं निश्रित्य शान्तेन ईर्यापथेन निषण्णम्। दृष्ट्वा च विस्मयोत्फुल्ल-दृष्टिः स्तोतुमारब्धः।

प्रणिधाय मनः सहेन्द्रियैर्विधिवद् वाक् च शरीरमेव च।
गुणभूत महागुणोदधेस्तव वक्ष्यामि गुणैकदेशताम् ॥१॥
परमप्रवरोऽसि वादिनामनवद्यः सुसमाहितेन्द्रियः।
परमार्थविदप्रकम्पितः प्रयत्नैः[1] सर्वपरप्रवादिभिः ॥२॥
चरणं सुसमाप्तमेव ते सुसमाप्तव्रत साधितव्रतः[2]।
बलवांश्च समाधिरव्ययस्तव नारायणशैलराजवत् ॥३॥
पुरुषर्षभ नास्ति ते व्यथा न विषादो न भयं न च क्लमः।
न च ते व्यसनं कुतः कलिर्न च भूतेषु कदाचिदक्षमा ॥४॥
न च धावसि नातिलीयसे न च सन्तप्यसि नापि हृष्यसे।
सततं शुभमेव ते मनः सततं मेरुरिवाचलाधिपः ॥५॥
मुनिपुङ्गव सर्वधातुभिर्विपुलं ज्ञानमपावृतं तव।
अपराहतमक्षयव्ययं विविधेष्वायतनेषु वर्तसे ॥६॥
न च तेऽस्ति मुने कथंकथा विमतिर्नास्ति न संशयः क्वचित्।
स्वयमेव न ते परापरं विदितं सर्वमवेदि विद्यया[3] ॥७॥

1 Tib. 253a, l. 5: བརྩོན་པ། 2 Ms. वृतः

3 Tib. 253b, l. 3-4:

ཁྱོད་ཉིད་ཀྱིས་ནི་མཆོག་དང་མཆོག་མིན་པ།
རིག་པས་ཐུགས་སུ་ཆུད་ནས་ཐམས་ཅད་མཁྱེན།

प्रियदर्शनसाधुदर्शनप्रियसाधुप्रियपण्डितप्रियः ।
सममेव हि ते प्रियाप्रियं सततं प्रीतिकरस्तथेर्यसे[1] ॥८॥
मधुरप्रतिभानवानसि स्मितवाक्यः स्मृतिमान् विशारदः ।
विविदानुमतं[2] प्रभाषसे त्रिषु लोकेषु च ते स्तुतं यशः ॥९॥
नृसुरासुरयक्षराक्षसा बहवस्त्वामिहलोकपण्डिताः ।
उपगम्य मुने पुनः पुनः परिपृच्छन्ति न चाभिषूयसे[3] ॥१०॥
[4]स्ववचःपरितोषितास्त्वया नरदेवाः सुरयक्षराक्षसाः ।
प्रतियान्ति विनीतसंशयाश्चरणौ वन्द्य च ते महामुने ॥११॥
स्थितमासितमागतं गतं शयितं मौनमथाभ्युदीरितम् ।
अथ चीवरपात्रधारणं रुचिरं गौतम सर्वमेव ते ॥१२॥
अविलम्बितमद्रुतं[5] समं स्वरमाधुर्यगुणैः समन्वितम् ।
वचनं पुनरुक्तवर्जितं समये व्याहरसे नरोत्तम ॥१३॥
बलवानसि लोकविश्रुतः पुरुषज्ञः पुरुषर्षभः प्रभुः ।
न च मन्यसि नावमन्यसे सकलं लोकमिमं सदैवतम् ॥१४॥
न च विस्मयसे कदाचन प्रकृतिस्थेषु चलाचलेषु च ।
सुहृदेषु [च] दुर्हृदेषु च प्रतिकूलेष्वनुलोमवत्सु च ॥१५॥

1 Tib. 253b, l. 5: རྟག་ཏུ་དགའ་བའི་སྤྱོད་ལམ་དེ་བཞིན་མཛད། ।

2 Tib. 253b, l. 6: མཁས་རྣམས་འདོད་པ། ।

3 Tib. 253b, l. 7: ཁྱོད་ལ་ཡང་དང་ཡང་ཞུ་མི་བཟོད་མེད། ।=You do not lose forbearance.

4 Tib. 353b, l. 7: ཁྱོད་ནི་སྨྲ་བའི་གསུང་གིས་དགའ་མཛད་པས། ।

5 Tib. 254a, l. 3: ཐོགས་པ་མེད་མཐའ་མི་མྱུར་མཉམ་པས་ན། ।

परिदेव्यमदीननिस्वनं स्रुतलालार्पितसन्निनादितम्[1] ।
परिदाहविदाहसंयुतं भयरोगज्वरशोककर्षितम् ॥१६॥
प्रसमीक्ष्य जगत्समाकुलं विविधैर्दुःखशतैरुपद्रुतम् ।
चिररात्रमनाथमुत्सुकं भवतृष्णाप्रसृतं तमोवृतम् ॥१७॥
अवतार्य मुनेर्महाकृपां विविधां चात्मगतां प्रभावताम् ।
स्वयमेव हि शाक्यपुङ्गव व्यथितान्मोचयितुं त्वमुद्यतः ॥१८॥
भवदुःखमिदं सहेतुकं भवदुःखस्य च यः परिक्षयः ।
भवदुःखनिरोधगामिनी प्रतिपच्चाप्रतिमं त्वयोच्यते ॥१९॥
अतिवीर्य महाविनायकप्रवराणामनुवादिनां वर ।
न च ते सदृशः कुतोऽधिकस्त्रिषु लोकेष्वपि नैव विद्यते ॥२०॥
प्रतिघानुनया न सन्ति ते न च ते सन्ति मुने परिस्रवाः ।
अनुरोधविरोधविग्रहाः सततं सुव्रत नैव नैव ते ॥२१॥
अपहाय मुने प्रियाप्रिये सुखदुःखे वि[षमं समं तथा] ।
अरतिं च रतिं विपर्ययन्नुपशान्तश्चरसीह संयतः ॥२२॥
व्यसने न च नाम निर्मना न च नामोन्नमसे प्रशंसया ।
अयशश्च यशश्च ते समं सममाक्रुष्टमथापि वन्दितम् ॥२३॥
अतिवाक्यमथो तितिक्षसे परुषं पापजनैरुदीरितम् ।
समराग्रगतो विषाणवान् भृशमुक्तानिव कुञ्जरः शरान्[2] ॥२४॥

1 Tib. 254a, l. 6: སྨྲེ་སྔགས་འདོན་ཅིང་སྙིང་བརྗེར་སྨྲ་བ་དང་།
ཁ་ཆུ་འཛག་པས་ཉམ་ཐག་སྐད་འབྱིན་དང་།

2 Tib. 255a, l. 1: གླང་ཆེན་མཆེ་བར་ལྡན་པ་གཡུལ་ངོ་རུ།
འཛོར་བ་དྲག་ཏུ་འཕངས་པའི་མདར་དག་ལྟར།

सुवचस्त्वमृषे वचःक्षमः सुदुरुक्तेष्वपि नाभिषूयसे ।
सममेव च वर्तसे मुने परिभाषासु शुभासु वाक्षु च ॥२५॥
सततं च वरार्ह पूज्यसे नरदेवासुरयक्षराक्षसैः ।
ऋषिभिश्च सदा महात्मभिर्न च ते विक्रियते स्थिरं मनः ॥६२॥
प्रवरोऽहमितो न मन्यसेऽप्यवरोऽहमितो न मन्यसे ।
सदृशोऽहमितो न मन्यसे त्रिविधा मानविधा न सन्ति ते ॥२७॥
धृतिमान् समलोष्टकाञ्चनः समवैडूर्यकठल्लशर्करः ।
तृणकाष्ठसमं महामुने चरसीदं हि सदेवकं जगत् ॥२८॥
हिमभास्कररश्मिसंगमाच्छिशिरोष्णं पवनं समुद्वहन् ।
अधिवासयसे नगेन्द्रवन्न च ते प्रव्यथते स्थिरं मनः ॥२९॥
शयनासनपानभोजनं विविधं चीवरमुत्तराधरम् ।
इदमर्थिकतो निदेशसे[1] प्रतिसंख्याय मुने निरास्रवम्[2] ॥३०॥
न च शोचसि नाथ नास्ति मे न च ते सन्ति मुने परिग्रहाः ।
असितोऽसि[3] सुवाक्यनिर्ममः परिमुक्तो विविधैरुपद्रवैः ॥३१॥
न च लाभमवाप्य हृष्यसे तदलाभाच्च लयं न गच्छसि ।
अवमानमथो तितिक्षसे न च सम्मानमिहाभिनन्दसि ॥३२॥

1 Ms. निषीदसे

2 Tib. 255b, l. 1: ཐུབ་པ་ཟག་མེད་སོ་སོར་བརྟགས་ནས་ནི །
དེ་ཡི་དོན་དུ་སྟོན་པད་མཛད་པ་ལགས་ །

3 Ibid. l. 2: མ་བཅིངས=not fettered,

क्षतजोपममग्रचन्दनं सुरभूमन्दरसानुसम्भवम्[1] ।
असयो निशिताः शराश्च ते न विकुर्वन्ति मनः कदाचन ॥३३॥
न कथां कथयस्यनर्थिकां न च या दुर्जनसेविता कथा ।
न [च लाभकथा न] सामिषा[2] न च या नानुमता
महात्मभिः ॥३४॥
प्रविवेककथाः सुखावहाः प्रशमं याः प्रवदन्ति केवलम् ।
कथयस्यतिदेवताः कथाः कथिता या विनयन्ति किल्विषम् ॥३५॥
मधुराणि च सङ्गतानि च स्वभिनीतानि च सारवन्ति च ।
वचनानि मुने प्रभाषसे जगदर्थाय विनिश्चितानि च ॥३६॥
अबुधा विपरीतदर्शनाश्चपलाः साहसिकाः प्रियान्विताः ।
पिशुनाः परुषाः शठाश्च ये भगवंस्तैः सह सङ्गतं न ते ॥३७॥
अशठा ऋजवश्च ये नराः शुचयः सत्यरता जितेन्द्रियाः ।
सततं च समीक्ष्यकारिणो भगवंस्तैः सह सङ्गतं तव ॥३८॥
धर्मज्ञ नयज्ञ पुद्गलज्ञ त्वां वन्दे षडभिज्ञ सर्वदेव ।
क्षेत्रज्ञ मुने परापरज्ञ त्वां वन्दे शिरसा नयानयज्ञ ॥३९॥
पृथुमपि समीक्षते गुणं [तव] परिकथितो हि मया गुणैकदेशः ।
न तव गुणमहार्णवस्य पारं जगति पुमानधिगन्तुमार्य शक्तः ॥४०॥

1 Tib. 255b. l. 4: ལྷ་གནས་རི་ཡི་ངོས་ལས་འབྱུངས་པ་ཡི། ।
ཁྲག་ལྟར་དམར་བའི་ཙན་དན་མཆོག་དག་དང་ ।

2 Ibid., l. 5: རྙེད་པའི་གཏམ་མིན་ཟང་ཟིང་བཅས་གཏམ་མིན ।

इत्येवमादिभिः पञ्चभिः स्तोत्रशतैर्भगवानभिष्टुतः। तथाभिप्रसन्नस्य च भगवता नीलभूतेर्धर्मो देशितः। यथा यथा तस्मिन्नेवासने निषण्णेन सत्यदर्शनं कृतम्। अथ नीलभूतिर्ब्राह्मणो भगवन्तं स्तुत्वा प्रक्रान्तः। सोऽध्वप्रतिपन्नो माथुरैर्ब्राह्मणैः संचम्परीकृतः[1]। उपाध्याय त्वमस्माभिरभिहितः। श्रमणस्य गौतमस्यासत्कारं कुरुष्वेति। स त्वमेतर्हि स्तुत्वा आगतः। भवन्तो नत्वहं पूर्वमवोचम्। मम जिह्वा सत्याभिधायिनी। यद्याक्रोशार्हो भविष्यति। आक्रोशे। स्तवार्हो भविष्यति। स्तोष्य इति। स्तवार्हः श्रमणो गौतमो मया स्तुतः।

अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय मथुरां पिण्डाय प्राविक्षत्। तेन खलु समयेन मथुरायां नक्षत्ररात्रः प्रत्युपस्थितः। अथ या देवता मथुरायामध्युषिता तस्या एतदभवत्। यदि श्रमणो गौतमो मथुरां प्रवेक्ष्यति। मम नक्षत्ररात्रेरन्तरायं करिष्यतीति विदित्वा भगवतः पुरस्ताद्विनग्नोऽस्थात्। भगवानाह। अप्रतिच्छन्नस्तावद्देवते मातृग्रामो न शोभते प्रागेव विनग्न इति। अथ सा देवता जिह्रीय नग्नरूपा एकान्तेऽपक्रान्ता। ततो भगवान् मार्गादपक्रम्य पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् भिक्षूनामन्त्रयते स्म। पञ्चेमे भिक्षव आदीनवा मथुरायाम्। कतमे पञ्च। उत्कूलनिकूलाः स्थाणु-

1 Tib. 256b, l. 1: ཚིག་གི་ཀྱུ་ལྕུགས་ཀྱིས་པག་པ་ལས་ཕྲལ་བ་ཙམ་དུ་བརྒྱུ-ད་དེ། =वचोऽङ्कुशपरिविद्धगात्रः।

कण्टकप्रधाना बहुपाषाणशर्करकठल्ला उच्चन्द्रभक्ताः प्रचुरमातृग्रामा इति[1]।

अथ भगवान्न प्रविशन्नेव मथुरां येन गर्दभस्य यक्षस्य भवनं तेनोपसङ्क्रान्तः। उपसङ्क्रम्य गर्दभस्य यक्षस्य भवनमभ्यवगाह्यान्यतरद्वृक्षमूलं निश्रित्य निषण्णो दिवाविहाराय। अश्रौषुर्माथुरा ब्राह्मणगृहपतयो भगवान् पिण्डाय प्राविशत् देवतया विहेठितः। अप्रविशन्नेव मथुरां गर्दभस्य यक्षस्य भवनं गत इति श्रुत्वा च पुनः शुचिनः प्रणीतस्य खादनीयभोजनीयस्य प्रत्येकं प्रत्येकं स्थालीपाकं समुपानीय शकटे आरोप्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णान् श्राद्धान् माथुरान् ब्राह्मणगृहपतीन् भगवान् धर्म्यया कथया पूर्ववद्यावत्संप्रहर्ष्य तूष्णीम्। अथ श्राद्धा ब्राह्मणगृहपतय उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। इहास्माभिर्भदन्त भगवन्तमुद्दिश्य शुचिनः प्रणीतस्य खादनीयभोजनीयस्य शकटं पूर्णमानीतम्। तद् भगवान् प्रतिगृह्णातु अनुकम्पामुपादाय इति। तत्र भगवानानन्दमायुष्मन्तमामन्त्रयते। गच्छानन्द यावन्तो भिक्षवो गर्दभस्य यक्षस्य भवनमुपनिश्रित्य

1 Tib. 257a, l. 3-4: མཐོན་དམན་དང་། སྡོད་དུམ་དང་། ཚེར་མས་གང་བ་དང་། རྡོ་བ་དང་། གསེག་མ་དང་། གྱོ་མོ་མང་བ་དང་། དགོངས་ཀ་ཟ་བ་དང་། བུད་མེད་མང་བ་ཡིན་ནོ།

विहरन्ति तान् सर्वानुपस्थानशालायां सन्निपातय। परिभोक्ष्यन्ते पिण्डपातमिति। एवं भदन्त इत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य यावन्तो भिक्षवो गर्दभस्य यक्षस्य भवनमुपनिश्रित्य[1] विहरन्ति तान् सर्वानुपस्थानशालायां सन्निपात्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थित आयुष्मानानन्दो भगवन्तमिदमवोचत्। यावन्तो भदन्त भिक्षवो गर्दभस्य यक्षस्य भवनमुपनिश्रित्य[2] विहरन्ति सर्वे ते उपस्थानशालायां सन्निषण्णाः सन्निपतिताः। यस्येदानीं भगवान् कालं मन्यत इति। अथ भगवान् येनोपस्थानशाला तेनोपसंक्रान्तः। उपसंक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अथ माथुराः श्राद्धा ब्राह्मणगृहपतयः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसङ्घं विदित्वा पूर्ववद्यावद्धौतहस्तमपनीतपात्रं भगवतः पुरस्तात्तस्थुरायाचमानं चाहुः। भगवता भदन्त ते ते दुष्टनागा दुष्टयक्षाश्च विनीताः। अयं भदन्त गर्दभको यक्षोऽस्माकं दीर्घरात्रमवैरिणां वैरी। असपत्नानां सपत्नः। अद्रुग्धानां द्रोग्धा। जातानि जातान्यपत्यान्यपहरति। अहो वत भगवान् गर्दभकं यक्षं विनयेदनुकम्पामुपादायेति। तेन खलु समयेन गर्दभको यक्षस्तस्यामेव पर्षदि सन्निषण्णोऽभूत् सन्निपतितः। तत्र भगवान् गर्दभकं यक्षमामन्त्रयते। श्रुतं ते गर्दभक। श्रुतं मे भगवन्। श्रुतं ते गर्द-

1 Ms. ॰निसृत्य

2 Ms. निःसृत्त

भक। श्रुतं मे सुगत। विरमास्मात्पापकात् असद्धर्मात्। भगवन् समयतोऽहं विरमामि। यदि मामुद्दिश्य चातुर्दिशाय भिक्षुसंघाय विहारं कारयन्तीति। तत्र भगवान् माथुरान् श्राद्धान् ब्रह्मणगृहपतीनामन्त्रयते। श्रुतं वो ब्राह्मणगृहपतयः। श्रुतं भगवन्। कारयिष्यामः। तत्र भगवता गर्दभको यक्षः पञ्चशतपरिवारो विनीतः। श्राद्धैर्ब्राह्मणगृहपतिभिस्तानुद्दिश्य पञ्च विहारशतानि कारितानि। एवं शरो यक्षो वनो यक्षः आलिकावेन्दा मघा यक्षिणी विनीता। अथ भगवता ऋद्ध्या मथुरां प्रविश्य तिमिसिका[1] यक्षिणी पञ्चशतपरिवारा विनीता। तामप्युद्दिश्य पञ्चविहारशतानि कारितानीति। तत्र भगवता सान्तर्बहिर्मथुरायामर्धतृतीयानि यक्षसहस्राणि विनीतानि। तान्युद्दिश्य श्राद्धैर्ब्राह्मणगृहपतिभिरर्धतृतीयानि विहारसहस्राणि कारितानि।

अथ भगवान् ओतलामनुप्राप्तः। ओतलायां विहरति। ओतलीये वनषण्डे। तत्र ओतलायनो नाम ब्राह्मणमहाशालः प्रतिवसति आढ्यो महाधनो महाभोग इति विस्तरः।

अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय ओतलायां पिण्डाय प्राविक्षत्। अन्यतमस्मिन्प्रदेशे पञ्चमात्राणि कार्षिकशतानि

1 Ms. भगवतो भगवान् ऋद्धया विनीता। Tib. 259a, l. 5-6: དེ་བཞིན་དུ་གནོད་སྦྱིན་མ་དད་འཆན་དང་། གནོད་སྦྱིན་ནགས་ལྡན་དང་། གནོད་སྦྱིན་མོ་བསླངས་སྐྱེད་མ་དང་། མཚུ་རྣམས་བཏུལ་ཏོ། དེ་ནས་བཅོམ་ལྡན་འདས་རྫུ་འཕྲུལ་གྱིས་བཅོམ་བརྒྱུག་ཏུ་ཞུགསོ། ཞུགས་ནས་གནོད་སྦྱིན་མོ་མཁྱེན་ལྷ་མ་འཁོར་ལྔ་བརྒྱ་དང་བཏུལ་ནས།

उद्रजःशिरस्कानि शणशाटीनिवस्तानि हलं वाहयन्ति। अद्राक्षुस्ते कार्षिका बुद्धं भगवन्तं द्वात्रिं[शन्महापुरुषलक्षणा]लंकृतं द्योतितमूर्तिमिति विस्तरः[1]। भगवता तेषां धर्मो देशितः। यावन्मान्याश्चाभिवाद्याश्च संवृत्ताः[2]।

अथ तद्बलीवर्दसहस्रं योक्त्राणि वरत्राणि च्छित्त्वा येन भगवांस्तेनोपसंक्रान्तम्। उपसंक्रम्य भगवतः [पादौ शिरसा वन्दित्वा] संपरिवार्यावतस्थुः। भगवता तेषां त्रिभिः पदैर्धर्मो देशितो यावच्चातुर्महाराजिकेषु देवेषूपपन्नाः। यावद् दृष्टसत्याः स्वभवनं गताः।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त एभिः पञ्चभिः कार्षिकशतैरेभिश्च बलीवर्दैः कर्म कृतं यस्य कर्मणो विपाकेन कार्षिकाः संवृत्ता दरिद्रगृहेषूपपन्नाः। इमे च बलीवर्दाः संवृत्ताः। भगवानाह। एभिरेवं भिक्षवः कर्माणि कृतानीति विस्तरः[3]।

एते काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजिताः। एभिस्तत्र कौसीद्येनाभिनामितम्। तस्य कर्मणो विपाकेन कार्षिकाः संवृत्ताः। एभिश्च बलीवर्दैस्तत्रैव प्रव्रजितैः क्षुद्रानुक्षुद्रैः शिक्षापदैरनादरं कृतम्। तस्य कर्मणो विपाकेन तिर्यक्षूपपन्नाः। यत्ते काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रजितास्तस्य कर्मणो विपाकेन ममान्तिकात्सत्यदर्शनं कृतमिति हि भिक्षवः एकान्तकृष्णानामिति विस्तरः[4]।

1 See *Infra*, p. 20. 2 Cf. *Gilgit Mss.* III. ii, p. 131; *Divyā.*, p. 282.
3 Cf. *Divyā.*, p. 54. 4 See *Infra*, p. 24.

अश्रौषीदोतलायनो ब्राह्मणः श्रमणो गौतम ओतलामनुप्राप्तः। ओतलायां विहरति ओतलीयके वनषण्ड इति।

ओतलायनसूत्रं विस्तरेण संयुक्तकागमे मार्गवर्गनिपाते[1]।

अथ ओतलायनस्य ब्राह्मणस्यैतदभवत्। किं पुनरस्यानर्थं करिष्यामः। तेन च पूर्वं श्रुतं श्रमणो गौतमः सश्रावकं संघं भोजयित्वा प्रणिधानं करोति। स यच्चिन्तयति यत्प्रार्थयते तत्सर्वं प्रतिलभते इति। अथ ओतलायनो ब्राह्मणः उत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवन् गौतम श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। पूर्ववद्यावद् भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्मिथ्याप्रणिधानं चिन्तयितुमारब्धः। यावन्त इमे श्रमणाः शाक्यपुत्रीया मया भोजिताः सर्वे एते मम बलीवर्दाः स्युरिति। अथ भगवानोतलायनस्य ब्राह्मणस्य चेतसा चित्तमाज्ञाय ओतलायनं ब्राह्मणमिदमवोचत्। अप्रतिरूपं ते ब्राह्मण चित्तमुत्पादितम्। नैतत्समृध्यति[2]। तथा ह्येते सर्वे भिक्षवः क्षीणपुनर्भवाः। अन्यच्चित्तमुत्पादयेत्युक्त्वा भगवान् दक्षिणादेशनां कृत्वा प्रक्रान्तः। अथ भगवान् विहारं गतः पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् भिक्षूनामन्त्रयते स्म। ओतलायनेन भिक्षवो ब्राह्मणेन मिथ्या-

1 The story of the tiller of soil and the bulls is not given here in extenso. The readers are referred to the *Otalāyaṇa Sūtra* in *Saṃyuktakāgama*.

2 Ms. समृद्धति

प्रणिधानसमुत्थं पापकं चित्तमुत्पादितम्। युष्माभिर्भुक्त्वा आर्षा गाथा वक्तव्या। मिथ्याप्रणिधानं न समर्द्धिष्यति[1]।

अथ भगवांस्तस्या एव रात्रेरत्ययादोतलां पिण्डाय प्राविक्षदायुष्मता आनन्देन पश्चाच्छ्रमणेन। तदा ओतलायां कचंगला नाम वृद्धा। सा उदकार्थिनी कूलमपसृता। भगवांस्तस्या विनयकालमवेक्ष्यायुष्मन्तमानन्दमामन्त्रयते। गच्छानन्द एतस्या वृद्धायाः कथय। भगवांस्तृषितः पानीयमनुप्रयच्छेति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य येन कचंगला वृद्धा तेनोपसंक्रान्तः। उपसंक्रम्य कचंगलां वृद्धामिदमवोचत्। कचंगले भगवांस्तृषितः पानीयमनुप्रयच्छेति। सा कथयति। आर्य अहं स्वयमेवानेष्यामीति। ततः कचंगला उदकघटं पूरयित्वा त्वरितत्वरिता येन भगवांस्तेनोपसंक्रान्ता। ददर्श कचंगला बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्या चानुव्यंजनैर्विराजितगात्रं व्योमप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्[2]। कचंगला-सहदर्शनादस्याः पुत्रस्नेहमुत्पन्नम्। सा ऊर्ध्वबाहुः पुत्र पुत्रेति भगवन्तं परिष्वङ्क्तुमारब्धा। भिक्षवस्तां वारयन्ति। भगवानाह। मा यूयं भिक्षवः एतां वृद्धां वारयत। तत्कस्य हेतोः।

पञ्च जन्मशतान्येषा मे माताभून्निरन्तरम्।
सा चेदेषा निवारिता मम गात्रस्य श्लेषणात्॥

1 Ms. समृद्धिष्यति　　2 Cf. *Divyā*, p. 46-47.

इदानीं रुधिरं ह्युष्णं कण्ठादेषा वमेत्क्षणात्[1] ।
कृतज्ञतामनुस्मृत्य दृष्ट्वेमां पुत्रलालसाम् ।
कारुण्याद्गात्रसंश्लेषं प्रददाम्यनुकम्पया ॥ इति ॥

भगवता तस्याः कण्ठाश्लेषो दत्तः । पुत्रस्नेहं विनोद्य भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय । ततो भगवता तस्या आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चातुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां [श्रुत्वा] कचंगलया विंशतिशिखरसमुद्गतं[2] सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्[3] । सा दृष्टसत्या उदानमुदानयति । 'इदमस्माकं भदन्त न मात्रा कृतं न पित्रा । पूर्ववद्यावत्[4] ।' अनाद्यकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम् । गाथां च भाषते ।

यत्कर्तव्यं सुपुत्रेण मातानुग्रहकारिणा ।
तत्कृतं भवता मेऽद्य चित्तं मोक्षपरायणम् ॥
दुर्गतिभ्यः समुद्धृत्य स्वर्गे मोक्षे च ते अहम् ।
स्थापिता सुप्रयत्नेन साधु ते दुष्करं कृतम् ॥

1 Tib. 264a. l. 1: འདི་ཡི་ཁ་ནས་སྐྱུགས་པར་འགྱུར།

2 Tib. 264a, l. 4: ཚོགས་ལ་ལྟ་བའི་རིའི་རྩེ་མོ་ཉི་ཤུ་མཐོ་བ།

3 Cf. *Divyā.*, p. 46.

4 Cf. *Divyā*, p. 47: इदमस्माकं भदन्त मात्रा कृतं न पित्रा कृतं न राज्ञा नेष्टस्वजनबन्धुवर्गेण न देवताभिर्न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद् भगवतास्माकं तत् कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लंघिता अस्थिपर्वताः पिहितान्यपायद्वाराणि प्रतिष्ठापिता वयं देवमनुष्येष्वति-
[illegible] ।

इत्युक्त्वा भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्ता। अथ कचंगला अपरेण समयेन स्वामिनमनुज्ञाप्य येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णा। एकान्तनिषण्णा कचङ्गला भगवन्तमिदमवोचत्। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुणीभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति। भगवता महाप्रजापत्ये संन्यस्ता। ततस्तया प्रव्राजिता उपसंपादिता अववादो दत्तः। तया युज्यमानया घटमानया व्यायच्छमानया सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्तिनी च बभूव। त्रैधातुकवीतरागा पूर्ववन्मान्या च संवृत्ता[1]।

यदा भगवान् भिक्षुणीनां संक्षेपेणोद्दिश्य विहारं प्रविशति प्रतिसंलयनाय तदा तं कचंगला विस्तरेण व्याकरोति। तत्र भगवान् भिक्षूनामंत्रयते स्म। एषाग्रा मे भिक्षवो भिक्षुणीनां मम श्राविकाणां सूत्रान्तविभागकर्त्रीणां यदुत कचंगला भिक्षुणी इति।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त कचंगलायाः कर्म कृतं येन वृद्धा प्रव्रजिता। किं च कर्म कृतं येन दरिद्रा दासी च संवृत्ता भगवांश्च पश्चिमेन गर्भवासेन धारितः। प्रव्रज्यार्हत्त्वं च साक्षात्कृतम्। भगवता च सूत्रान्तविभागकर्त्रीणामग्रा निर्दिष्टेति। भगवानाह। कचङ्-

1. See *Gilgit Mss.* III, pt. ii, p. 131; also *Divyā.*, p. 282; Tib. 265a.l. 2 marks here འདུལ་བ་གཞི་བམ་པོ་སོ་བདུན་པ།

लयैव भिक्षवो भिक्षुण्या कर्मा[णि] कृतान्युपचितानि लब्ध-संभाराणि पूर्ववद्यावत् फलन्ति खलु देहिनाम्[1]।

भूतपूर्वं भिक्षवो बोधिसत्त्वचर्यायां वर्तमानस्य एषा मम माता बभूव। यदाहं प्रव्रजितुमिच्छामि तदा मामेव वारयति। तस्य कर्मणो विपाकेन वृद्धा प्रव्रजिता। दानं ददतो मेऽनया दानान्तरायः कृतः। तेन दरिद्रा संवृत्ता। न चानया पुण्य-महेशाख्यसंवर्तनीयानि[2] कर्माणि कृतानि यथा महामायया येनाहमनया पश्चिमे गर्भवासेन धारितः। काश्यपे च सम्यक्संबुद्धे प्रव्रजिता याः शैक्षाशैक्षा भिक्षुण्यो दासीवादेन समुदाचरिताः। तेन दासी संवृत्ता। यत्तत्रानया पठितं स्वाध्यायितं स्कन्धकौशलं धातुकौशलमायतनकौशलं प्रत्ययसमुत्पादकौशलं स्थानास्थान-कौशलं च कृतं तेन मम शासने प्रव्रज्य सर्वक्लेशप्रहाणाद-र्हत्त्वं साक्षात्कृतम्। यस्याश्चोपाध्यायिकायाः सकाशे प्रव्रजिता सा भगवता काश्यपेन सम्यक्संबुद्धेन सूत्रान्तविभागकर्त्री-णामग्रा निर्दिष्टा। तत्रानया मरणकालसमये प्रणिधानं कृतं यन्मया भगवति काश्यपे सम्यक्संबुद्धे अनुत्तरे दक्षिणीये यावदायु-र्ब्रह्मचर्यं चरितं न च कश्चिद् गुणगणोऽधिगतः। अनेन कुशलमूलेन योऽसौ भगवता काश्यपेनोत्तरो नाम मानवो व्याकृतो भविष्यति। त्वं मानव वर्षशतायुषि प्रजायां शाक्यमुनि-र्नाम तथागतोऽर्हत्सम्यक्संबुद्ध इति। तस्याहं शासने प्रव्रजेयम्।

1 See *Divyā.*, p. 54; *Gilgit Mss.* III, pt. ii, p. 137.

2 Ms. महीशाख्य॰ ; cf. *Divyā.*, p. 102, 243

यथैषा मे उपाध्यायिका भगवता काश्यपेन सम्यक्संबुद्धेन सूत्रान्त-विभागकर्त्रीणामग्रा निर्दिष्टा। एवं मामप्यसौ भगवान् शाक्य-मुनिः सूत्रविभागकर्त्रीणामग्रां निर्दिशेदिति। तत्प्रणिधान-वशादेतर्हि मया सूत्रान्तविभागकर्त्रीणामग्रा निर्दिष्टा। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः। पूर्व-वद्यावत्। आभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्य-मिदमवोचत्[1]।

तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। आगमयानन्द येन वैरंभ्यमिति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत्। अथ भगवान् संप्रस्थितो यावदन्यतमस्मिन्नारामे। ब्राह्मणः कूपात् पानीयमुद्धरति। आरामं सेक्तुमारब्धः। अद्राक्षीत् स ब्राह्मणो भगवन्तं दूरादेव। दृष्ट्वा च पुनः संलक्षयति। यदि श्रमणो गौतम आरामं प्रवेक्ष्यति। आराममुदपानं स दूषयतीति। ततो रज्जुं तिप्यकं[2] च गोपायित्वा स्थितः। अथ भगवान् ऋद्ध्यारामं[3] प्रविष्टः। पांचिकेन च महायक्षसेनापतिना तदुदपानं प्लावीकृतम्[4]। सर्वोऽसावाराम उदकेन प्लावितः। ततोऽसौ ब्राह्मणो महर्धिकोऽयं श्रमणो गौतमो महानुभाव इति विदित्वातिप्रसन्नः कथयति।

1 Cf. *Divyā*, p. 55, 193 : इति भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णविपाक एकान्तशुक्लानां कर्मणामेकान्तशुक्लविपाको व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम्। इदमवोचद् भगवान्।

2 Tib. 266b, l. 7: སྒོ་བཅད།

3 Ms. रिध्यातमा०

4 Tib. 267a, l. 1: བཟུང་ནས།

आगच्छतु भगवन् गौतम। इयं रज्जुरिदं तिप्यकम्। गृह्णातु पानीयं यथासुखमिति।

अथ भगवांस्तस्यां वेलायां गाथां भाषते।

किं कुर्यादुदपानेन आपश्चेत्सर्वतो यदि।

छित्त्वेह मूलं तृष्णायाः कस्य पर्येषणं चरेत्[1] ॥ इति।

अथासौ ब्राह्मणो भगवन्तमिदमवोचत। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं पूर्ववद्यावत्। एहि भिक्षुकया प्रव्राजितः।

एहीति[2] चोक्तः स तथागतेन मुण्डश्च संघाटीपरीतदेहः।

सद्यः प्रशान्तेन्द्रिय एव तस्थौ नैव स्थितो बुद्धमनोरथेन[3] ॥

तेनोद्यच्छमानेन घटमानेन व्यायच्छमानेन सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन् संवृत्तः। त्रैधातुकवीतरागः पूर्ववद्यावदभिवाद्यश्च संवृत्तः[4]।

अथ भगवाञ्छूरसेनेषु जनपदेषु चारिकां चरन् वैरंभ्यमनुप्राप्तो वैरंभ्ये विहरति नडेरपिचुमन्दमूले। तेन खलु समयेन वैरंभ्येष्वग्निदत्तो नाम ब्राह्मणराजो राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च। अश्रौषीदग्निदत्तो ब्राह्मणराजः श्रमणो गौतमः शूरसेनेषु[5] जनपदेषु चारिकां चरन् वैरंभ्यमनुप्राप्तो वैरंभ्ये विहरति नडेरपिचुमन्दमूले

1 Cf. *Divyā.*, p. 56.

2 Mss. एह्येति।

3 Cf. *Divyā.*, p. 37, 48.

4 See Gilgit Ms. III, ii, p. 131 ; *Divyā.*, p. 282.

5 Ms. शूर्वसामन्तरासेनेषु।

इति। श्रुत्वा च पुनरस्यैतदभवत्। श्रमणो गौतमः सर्वसामन्तराजानां सत्कृतो गुरुकृतो मानितः पूजितोऽर्हतसंमतः। स चेदहं श्रमणं गौतमं [न] सत्करिष्यामि प्रातिसीमानां कोट्टराजानां गर्ह्यो भविष्यामि। बालो वत भवन्तोऽग्निदत्तो ब्राह्मणराजो यस्य ग्रामक्षेत्रमुपनिश्रित्य श्रमणो गौतमो विहरति न च सत्करोति। यत्त्वहं श्रमणं गौतमं सश्रावकसंघं सर्वोपकरणैः प्रवारयेयमिति विदित्वा महत्या राजर्द्ध्या महता राजानुभावेन वैरंभ्यान्निष्क्रम्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवता सार्धं संमुखं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्य एकान्ते निषण्णः। एकान्तनिषण्णमग्निदत्तं ब्राह्मणराजं भगवान् धर्म्यया कथया सन्दर्शयति समादापयति पूर्ववद्यावत्संप्रहर्ष्य तूष्णीम्।

अथाग्निदत्तो ब्राह्मणराज उत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् गौतमस्त्रैमासीं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्धं भिक्षुसंघेन इति। अधिवासयति भगवानग्निदत्तस्य ब्राह्मणराजस्य तूष्णींभावेन। अथाग्निदत्तो ब्राह्मणराजो भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतोऽन्तिकात् प्रक्रान्तः। तेन निवेशनं गत्वा अमात्यानामाज्ञा दत्ता। प्रतिदिवसमष्टादशप्रकारं खाद्यकं पचत नानासूपिकरसव्यंजनोपेतं च प्रभूतं भक्तम्। वैरंभ्ये च घण्टावघोषणं कारितम्। नान्येन श्रमणो गौतमस्त्रैमासीं भोजयितव्यः। यो भोजयति तस्य वधो दण्ड इति। स एवं घण्टावघोषणं कृत्वा

रात्रौ शयितः स्वप्नमद्राक्षीत्। आत्मीयैरन्वैः[1] सर्वं वैरम्भ्यं नगरं वेष्टितम्। दृष्ट्वा च पुनर्भीतः संत्रस्तः आहृष्टरोमकूपो लघु लघ्वेव महार्हशयनादुत्थाय करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। मा हैव मे अतो निधनं राज्याच्च्युतिर्भविष्यति जीवितस्य वान्तराय इति। स प्रभातायां रजन्यां ब्राह्मणाय पुरोहिताय निवेदयामास। उपाध्याय मया ईदृशः स्वप्नो दृष्टः। कथमत्र प्रतिपत्तव्यमिति। ब्राह्मणः पुरोहितः संलक्षयति। किं चापि देवेनाशोभनः स्वप्नो दृष्टः। यद्यहमेनमनुसंवर्णयेयं भूयस्या मात्रया श्रमणो गौतमः प्रसादमुत्पादयिष्यति। यत्त्वह-मेनं विवर्णयेयमिति विदित्वा कथयति। देवेन शोभनः स्वप्नो न दृष्टः। उपाध्याय किंविपाकोऽयं भविष्यति। नियतं देवस्य राज्यच्युतिर्भविष्यति जीवितस्य वान्तरायः। राजा संलक्षयति। अहो वत मे न राज्यच्युतिः स्याद् [वा] जीवितस्यान्तराय इति विदित्वा ब्राह्मणं पुरोहितमिदमवोचत्। उपाध्याय कोऽसावुपायः स्याद्येन मे न राज्यच्युतिर्भवेन्नापि जीवितस्यान्तराय इति। स कथयति। यदि देवस्त्रैमासीमदर्शनपथे तिष्ठति एवं देवस्य न राज्यच्युतिर्भवति नापि जीवितस्यान्त-रायः। अग्निदत्तो ब्राह्मणराजः संलक्षयति। यद्येवं सुकरम्। एवं कारयामि घंटावघोषणमिति। तेन सर्वविजिते घंटावघोषणं कारितम्। न मम केनचित्त्रैमासीं दर्शनायोपसंक्रमितव्यम्। य उपसंक्रामति तस्य वधो दण्ड इति। स घंटावघोषणं कृत्वा

1 Ms. आत्मदीयैरन्वैः; Tib, 268b,l. 7: བདག་གི་རྒྱ་མས།

त्रैमासीमदर्शनपथे स्थितः। आयुष्मानानन्दः काल्यमेवोत्थाय येनाग्निदत्तस्य ब्राह्मणराजस्य निवेशनं तेनोपसंक्रान्तः। यावत् पश्यत्यग्निदत्तस्य ब्राह्मणराजस्य पौरुषेया अल्पोत्सुकान् कृत्वा तिष्ठन्ति। दृष्ट्वा च पुनः कथयति। भवन्तः किमल्पोत्सुकास्तिष्ठथ। ते कथयन्ति। आर्य किं कुर्मः। न त्वग्निदत्तेन ब्राह्मण-राजेन बुद्धप्रमुखो भिक्षुसंघस्त्रैमासीं सर्वोपकरणैः प्रवारितः। ते यूयमल्पोत्सुकास्तिष्ठथ नाहारं सज्जीकुरुथ नासनप्रज्ञप्तिम्। किं बुद्धप्रमुखो भिक्षुसंघो भक्तच्छेदं करिष्यतीति। ते कथयन्ति। आर्यानन्द देवेनाज्ञा दत्ता। पंचानां शतानामाहारं सज्जीकुरुत प्रणीतं प्रभूतं चेति। न तूक्तममुकस्यार्थायेति। भवन्तो गत्वा आरोचयत। आर्य देवेन घंटावघोषणं कारितम्। न मम केन-चिद्दर्शनायोपसंक्रमितव्यम्। य उपसंक्रामति तस्य वधो दण्ड इति। तत्किमस्माकं शिरोद्भयम्। न वयमारोचयाम इति। अथायुष्मानानन्दो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य एत-त्प्रकरणं भगवतो विस्तरेणारोचयति। तत्र भगवानायुष्मन्त-मानन्दमामन्त्रयते। गच्छानन्द संघाटीमादाय पश्चाच्छ्रमणं च वैरंभ्ये रथ्यावीथीचत्वरशृङ्गाटकेष्वारोचय। यो युष्माकं भवन्तः उत्सहते बुद्धप्रमुखं भिक्षुसंघं च त्रैमासीं भोजयितुं भोजयत्विति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य संघाटीमादाय पश्चाच्छ्रमणं च रथ्यावीथीचत्वरशृङ्गाटकेष्वा-रोचयति। यो युष्माकं भवन्त उत्सहते बुद्धप्रमुखं भिक्षुसंघं त्रैमासीं भोजयितुं स भोजयत्विति। वैरंभ्या ब्राह्मणगृह-

पतयः कथयन्ति। आर्यानन्द एकैकोऽस्माकमुत्सहते त्रैमासीं भोजयितुम्। अपि तु अनेन कलिराजेन घंटावघोषणं कारितम्। नान्येन केनचित् त्रैमासीमुपनिमंत्र्य बुद्धप्रमुखो भिक्षुसंघो भोजयितव्यः। यो भोजयति तस्य वधो दण्ड इति।

यावदुत्तरापथात् सार्थवाहः पंचाश्वशतानि पण्यमादाय वैरंभ्यमनुप्राप्तः। स संलक्षयति। यदिदानीं गमिष्यामि अश्वानां खुरः क्लेदमापत्स्यते। अपर्णा भविष्यन्ति[1]। इहैव तिष्ठामीति। स तत्रैवावस्थितः। तेनाश्वाजानेयस्य द्वौ यवप्रस्थौ प्रज्ञप्तौ। अवशिष्टानामश्वानामेकैकः। श्रुतं चानेन राज्ञा अयं चायं च क्रियाकारः कृतः। आयुष्मतानन्देन एवमारोचितमिति। स संलक्षयति। नाहमस्य राज्ञो विषये निवासी। किं मम राजा करिष्यति। इति विदित्वायुष्मन्तमानन्दमिदमवोचत्। आर्यानन्द मया अश्वाजानेयस्य द्वौ यवप्रस्थौ प्रज्ञप्तौ। अवशिष्टानामश्वानामेकैकः। यदि भगवानुत्सहते यवान् परिभोक्तुमहं भगवतः प्रस्थद्वयमनुप्रयच्छामि। अन्येषां च भिक्षूणामेकैकमिति।

अथायुष्मानानन्दो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य एतत्प्रकरणं भगवतो विस्तरेणारोचयति। अथ भगवत एतदभवत्। मयैवैतानि कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत् प्रत्युपस्थितानि। अवश्यंभावीनि मयैवैतानि कर्माणि कृतान्युपचितानि कोऽन्यः प्रत्यनुभविष्यति। न हि कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते।

1 Tib. 271a, l. 1: འོ་མ་པར་འགྱུར་མི་འགྱུར་བས།

नाब्धातौ। न तेजोधातौ। न वायुधातावपि। पूर्ववद्यावत्[1]। फलन्ति खलु देहिनामिति।

आयुष्मन्तमानन्दमामंत्रयते। गच्छानन्द भिक्षूणां शिलाकां[2] चारय। यो युष्माकमुत्सहते तथागतेन सार्धं वैरंभ्ये त्रैमासीं यवान् परिभोक्तुं स शिलाकां गृह्णात्विति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य शिलाकां चारयितुमारब्धः। यावद्भगवता शिलाकां गृहीत्वा भिक्षुद्वयोनैश्च पंचभिर्भिक्षुशतैः[3]। आयुष्मांस्तु शारिपुत्रः कथयति। भगवन्नहं वाय्वाबाधिको नोत्सहे त्रैमासीं यवान् परिभोक्तुमिति। आयुष्मान्महामौद्गल्यायनः कथयति। अहमस्योपस्थायिक इति। ततो भगवान् भिक्षुद्वयोनैः पंचभिर्भिक्षुशतैः सार्धं वैरंभ्ये वर्षा उपगतः। आयुष्मन्तौ शारिपुत्रमौद्गल्यायनौ त्रिशङ्कुं पर्वतं गत्वा वर्षा उपगतौ। ततः शक्रेण देवेन्द्रेण दिव्यया सुधया प्रवारितौ। ततः सार्थवाहो भगवतो द्वौ यवप्रस्थावनुप्रयच्छति। अन्येषां च भिक्षूणामेकैकम्।

तत्र भगवानायुष्मन्तमानन्दमिदमवोचत्। गच्छानन्द तथागतस्यार्थाय यवान् परिकर्मयेति। एवं भदन्तेति आयुष्मानानन्दो भगवतः प्रत्यंशमादाय येनान्यतमा वृद्धा स्त्री तेनोपसंक्रान्तः। उप-

1 See *Divyā.*, p. 54. न वायुधातांवपि तु उपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।
सामग्रीं प्राप्य कालञ्च फलन्ति खलु देहिनाम्॥

2 The common word is शलाकां

3 Tib. 271b, l. 6: དགེ་སློང་གཉིས་གིས་མ་ཚང་བས།

संक्रम्य तां स्त्रियमिदमवोचत्। भगिनि तथागतस्यार्थाय यवान् परिकर्मीकुरु। सा कथयति। आर्य अहं वृद्धा न शक्नोमि। अपि त्वेषा तरुणिका दारिका। अस्या अनुप्रयच्छ। एषा परिकर्मयतीति। आयुष्मानानन्दस्तस्याः सकाशमुपसंक्रान्तः। भगिनि शक्ष्यसि त्वं तथागतस्यार्थाय यवान् परिकर्मीकर्तुमिति। सा कथयति। आर्य समयेनाहं परिकर्मयामि। यदि मे आलापमनुप्रयच्छसीति। स कथयति। परिकर्मय दास्यामीति। सा परिकर्मयितुमारब्धा। पृच्छति च। आर्यक एष बुद्धो नाम इति। आयुष्मानानन्दः संलक्षयति। यद्यहमस्या बुद्धवर्णोदाहरणं करिष्ये गम्भीरा बुद्धधर्माः स्थानमेतद्विद्यते [यदसौ न विज्ञास्यतीति][1] यत्त्वहमस्याश्च[क्रवर्तिरत्न]वर्णोदाहरणमुदाहरेयमिति विदित्वा कथयति।

राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावात्सप्तानां रत्नानां लोके प्रादुर्भावो भवति। कतमेषां सप्तानाम्। तद्यथा। चक्ररत्नस्य हस्तिरत्नस्याश्वरत्नस्य मणिरत्नस्य स्त्रीरत्नस्य गृहपतिरत्नस्य परिणायकरत्नस्य सप्तमस्य।

राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावात्कथंरूपस्य चक्ररत्नस्य लोके प्रादुर्भावो भवति। इह भगिनि राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य तदेव पोषधे पंचदश्यां शिरःस्नातोपवासैरलंकृतस्य उपरि प्रासादतलगतस्यामात्यगणपरिवृतस्य पूर्वस्यां दिशि चक्ररत्नं प्रादुर्भवति सहस्रारं सनाभिकं सनेमिकं सर्वाकार-

1 Tib. 272b, l. 5: འདིས་ཤེས་པར་མི་འགྱུར་བའི་གནས་གང་ཡིན་པ་ཡོད་ །

परिपूर्णं शुभमकर्मारकृतं[1] दिव्यं [सर्व]सौवर्णम्। शुभं चानेन भवति। यस्य राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य तदेव पोषधे पंचदश्यां पूर्ववद्यावत्सर्वसौवर्णम्। भवति स राजा चक्रवर्तीति अद्धाहमस्मि राजा चक्रवर्तीति चक्ररत्नं मीमांसितुकाम उत्थायासनादेकांसमुतरासंगं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य तच्चक्ररत्नमुभाभ्यां पाणिभ्यां प्रतिगृह्य वामे[2] पाणौ प्रतिष्ठाप्य दक्षिणेन पाणिना अनुवर्तयति। जयस्व भो चक्र-रत्न येनार्यः पुराणश्चक्रवर्तिपथ इति।

अथ चक्र[र]त्नं राज्ञा चक्रवर्तिना अनुप्रवर्तितमुपरि-विहाय[सम]भ्युद्गम्य पूर्वेण प्रायासीद्येनार्यः पुराणश्चक्रवर्तिपथः। अन्वेति राजा चक्रवर्ती तच्चक्ररत्नं सार्धं चतुरङ्गेण बल-कायेन। यस्मिंश्च प्रदेशे तच्चक्ररत्नं प्रतितिष्ठति तत्र राजा चक्रवर्ती वासं कल्पयति सार्धं चतु[रङ्गेण ब]लकायेन। [ये खलु] पूर्वस्यां दिशि कोट्टराजानस्ते येन राजा चक्र-वर्ती तेनोपसंक्रामन्ति। उपसंक्रम्य राजानं चक्रवर्तिनमेवं वदन्ति। एतु देवः। स्वागतं देवस्य। इमे देवस्य जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च [सुभिक्षा]श्चाकीर्णबहुजन[मनुष्या]श्च तान् देवः समनुशास्तु। वयं देवस्यानुयात्रिका भविष्यामः। तेन हि यूयं ग्रामण्यः स्वकस्वकानि विजितानि समनुशासथ

1 Cf. *Lalitavistara* (ed. R. L. Mitra), pp. 15 f; *Dīgha Nikāya*, II, pp. 172f; *Divyā.*, p. 211; Tib. 273a, l. 4: མཁན་བཟོས་མ་བྱས་པ། =अ+कर्मारकृतम्।

2 Ms. वामेन

धर्मेण माधर्मेण। मा च वः कस्यचिदधर्मचारिणो [1]वि[ष]च्चारिणो राष्ट्रे वासो रोचताम्। ए[तत्प्रकार]मानुयात्रिका भविष्यथ। अथ तच्चक्ररत्नं पूर्वां दिशमभिनिर्जित्य पूर्व[व]न्महासमुद्रं प्रत्युत्तीर्य दक्षिणेन पश्चिमेनोत्तरेण प्रायासीद्येनार्यः पुराणश्चक्रवर्तिपथः। अथ [चक्ररत्नं] राज्ञा चक्रवर्तिनानुप्रवर्तितमुपरि विहाय[समभ्युद्गम्य] उत्तरेणान्वावृतं[2] येनार्यः पुराणश्चक्रवर्तिपथः। अन्वेति राजा चक्रवर्ती तच्चक्ररत्नं सार्धं चतुरङ्गेण बलकायेन। यस्मिन्प्रदेशे तच्चक्ररत्नं प्रतितिष्ठति तत्र राजा चक्रवर्ती [वासं कल्पयति] सार्धं चतुरङ्गेण बलकायेन। ये खलूत्तर[स्यां दिशि कोट्टराजानः] ते येन राजा चक्रवर्ती तेनोपसंक्रामन्ति। उपसंक्रम्य राजानं चक्रवर्तिनमेवं वदन्ति। एहि देव। स्वागतं देवस्य। इमे देवस्य जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्चाकीर्णबहुजनमनुष्याश्च। तान् देवः समनुशास्तु। वयं देवस्या[नुयात्रिका भविष्यामः]। तेन हि यूयं ग्रामण्यः स्वकस्वकानि विजितानि समनुशासथ धर्मेण माधर्मेण। मा च वः कस्यचिदधर्मचारिणो राष्ट्रे वासो रोचतामिति। अथ चक्ररत्नमुत्तरां दिशमभिनिर्जित्योत्तरमहासमुद्रं प्रत्युत्तीर्य तामेव राजधानीमागत्योपर्यस्याधिकरणस्योच्छ्रापितमिवास्थात्[3]। राज्ञो भगिनि चक्रवर्तिनो

1 Tib. 274a, l. 1: འདྲེན་མར་སྤྱོད་པ་ཞིག་ཡོད་ན། ཁྱེད་ཀྱིས་དེ་ཡུལ་འཁོར་དུ་མ་བཞག་ཤིག་དེ་ལྟ་ན་ཁྱོད་ཅག་ཁོ་བོའི་བཀའ་བཞིན་བྱེད་པ་ཡིན།

2 Tib. 274a, l. 4: བྱང་ཕྱོགསུ་སྟོན་གྱི།

3 Tib. 274b, l. 4: དཀོར་ཁང་གི་སྟེང་དུ་སྒྲོག་ཤིང་བརྩུགས་པ་བཞིན་དུ་གནསོ།

लोके प्रादुर्भावादस्यैवंरूपस्य चक्ररत्नस्य लोके प्रादुर्भावो भवति ।

राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावात्कथंरूपस्य हस्तिरत्नस्य लोके प्रादुर्भावो भवति । इह भगिनि राज्ञश्चक्रवर्तिनो हस्ती भवति सर्वश्वेतः कुमुदवर्णः सप्ताङ्गः सुप्रतिष्ठितोऽभिरूपो दर्शनीयः प्रासादिकः । यं दृष्ट्वा राज्ञश्चक्रवर्तिनश्चित्तमभिप्रसीदति । भद्रकं वरहस्तिरत्नं स[कृद् द]मथमेष्यतीति । अथ राजा चक्रवर्ती संख्यातं हस्तिदमकं[1] दूतेन प्रक्रोष्येदमवोचत् । इदं त्वया सौम्य संख्यातं हस्तिरत्नं क्षिप्रमेव सुदान्तं कृत्वास्माकमुपनयितव्यमिति । एवं देव इति संख्यातो हस्तिदमको राज्ञश्चक्रवर्तिनः प्रतिश्रुत्य हस्तिरत्नमेकाह्ना [2]सर्वचारणेभिरुपसंक्रामति । तदेकाह्ना सर्वचारणेभिरुपसंक्रम्यमानमेकाह्ना सर्वचारणैः प्रतिगृह्णाति । तद्यथान्ये हस्तिनोऽनेकवार्षिका अनेकवर्षगणदान्ताः सर्वचारणेभिरुपसंक्रम्यमानं प्रतिगृह्णन्ति । एवमेतद्धस्तिरत्नमेकाह्ना सर्वचारणैः प्रतिगृह्णाति । दान्तं चैनं विदित्वा राज्ञश्चक्रवर्तिनः उपनयति । दान्तं देव भद्रं हस्तिरत्नम् । यस्येदानीं देवः कालं मन्यत इति । अथ राजा चक्रवर्ती तद्धस्तिरत्नं मीमांसितुकामः सूर्यस्याभ्युद्गमनकालसमये तद्धि [हस्ति]रत्नमभि[रु]ह्येमामेव समुद्रपर्यन्तां महापृथिवीमन्वाहिण्ड्य तामेव राजधानी-

1 Tib. 275a, l. 1: གླང་པོ་འདུལ་སྦྱོང་མཁན་མཁས་པ །

2 Tip. 275a, l. 3: བསླབ་པ་ཐམས་ཅད །

मागत्य प्रातराशिकमकार्षीत्। राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावादस्यैवंरूपस्य हस्तिरत्नस्य प्रादुर्भावो भवति।

राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावात्कथंरूपस्याश्वरत्नस्य लोके प्रादुर्भावो भवति। इह भगिनि राज्ञश्चक्रवर्तिनः अश्वो भवति सर्वनीलः कृष्णशिरा मनोज्ञो जवनो[1]ऽभिरूपो दर्शनीयः प्रासादिकः। यं दृष्ट्वा राज्ञश्चक्रवर्तिनश्चित्तमभिप्रसीदति। भद्रकं वताश्वरत्नं [2]सकृद् [दमथ]मेष्यतीति। अथ राजा चक्रवर्ती संख्यातमश्वदमकं दूतेन प्रक्रोष्येदमवोचत्। इदं त्वया सौम्य संख्यातमश्वरत्नं क्षिप्रमेव सुदान्तं कृत्वास्माकमुपनयितव्यमिति। एवं देवेति संख्यातोऽश्वदमको राज्ञश्चक्रवर्तिनः प्रतिश्रुत्य तदश्वरत्नमेकाह्ना सर्वचारणैरुपसंक्रामति। तदेकाह्ना सर्वचारणेभिरुपसंक्रम्यमानमेकाह्ना सर्वचारणैः प्रतिगृह्णाति। तद्यथान्ये अश्वा अनेकवार्षिका अनेकवर्षगणदान्ताः सर्वचारणेभिरुपसंक्रम्यमानाः सर्वचारणैः प्रतिगृह्णन्ति। एवमेव तदश्वरत्नमेकाह्ना सर्वचारणेभिरुपसंक्रम्यमानमेकाह्ना सर्वचारणैः प्रतिगृह्णाति। दान्तं चैनं विदित्वा राज्ञश्चक्रवर्तिन उपनामयति। दान्तं देव भद्रमश्वरत्नं यस्येदानीं देवः कालं मन्यते। अथ राजा चक्रवर्ती अश्वरत्नं मीमांसितुकामः सूर्यस्याभ्युद्गमनकालसमये तदश्वरत्नमभिरुह्य मामेव समुद्रपर्यन्तां महापृथिवी[मन्वाहिण्डय] तामेव राजधानीमागत्य

1 Tib., 275b, l. 2-3: མགོ་གནག་ཅིང་རྡོག་འཇུག་སྒྲུག་པ།

2 Ibid., སྒྱུར་དུ།

प्रातराशमकार्षीत्। राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावा-दस्यैवंरूपस्याश्वरत्नस्य लोके प्रादुर्भावो भवति।

राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावात्कथंरूपस्य [मणि-रत्नस्य] लोके प्रादुर्भावो भवति। इह भगिनि राज्ञश्चक्रवर्तिनो मणिर्भवति अष्टांशो वैडूर्यः शुभो जातिमानच्छो विप्रसन्नः अनाविलः। यावद्राज्ञश्चक्रवर्तिनोऽन्तःपुरे दीपकृत्यं सर्वं तन्-मणेराभया। अथ राजा चक्र[वर्ती तन्मणि]रत्नं मीमांसितु-कामोऽन्धकारतमिस्रायां रात्र्यां शनैर्मन्दं मन्दं देवे वृष्टायमाने विद्युत्सु निश्चरन्तीषु मणिरत्नं ध्वजाग्रे आरोप्योद्यानभूमिं निर्याति सार्धं चतुरंगेण बलकायेन। यावत् खलु राज्ञश्चक्रव[र्तिनो चतुरंगो] बलकायः सर्वः स्फुटो [म]णेराभया। अर्धयोजनं च साम-न्तकेन। राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावादस्यैवंरूप[स्य मणिरत्नस्य लोके प्रादुर्भावो भवति।

राज्ञो भगिनि चक्रवर्तिनो लोके प्रादुर्भावात्कथंरूप[स्य स्त्रीर]त्नस्य लोके प्रादुर्भावो भवति। इह भगिनि राज्ञश्चक्रवर्तिनः स्त्री भवति अभिरूपा दर्शनीया प्रासादिकी नातिगौरी नातिश्यामा मद्गुरुच्छविर्नातिदीर्घा नातिह्रस्वा सुप्रतिष्ठिता नातिकृशा नातिस्थूला नात्युत्सदमांसा [तनुगा]त्री। तस्याः खलु भगिनि शीते उष्ण[सं]स्पर्शानि गात्राणि उष्णे शीतसंस्पर्शानि गात्राणि कालिङ्गप्रावारमृदुसंस्पर्शानि। तस्याः खलु भगिनि सर्वरोमकूपेभ्यश्चन्दनगन्धो वाति मुखाच्च [उत्पलगन्धः][1]।

1 Tib. 277a, l. 1: ཁ་ནས་ནི་ཨུད་པ་ལ་སྔོན་པོའི་དྲི་འབྱུང་ངོ།

यावदा[युष्मा]नानन्दः स्त्रीरत्नं विभजति तावत्तया दारिकया ते यवाः परिकर्मिताः। सा पादयोर्निपत्य प्रणिधानं कर्तुमारब्धा। आर्य अनेनाहं कुशलमूलेन राज्ञश्चक्रवर्तिनः स्त्रीरत्नं स्यामिति। अथायुष्मानानन्दो यवान् परिकर्मितानादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतो यवानुपनामयति। जानकाः पृच्छका बुद्धा भगवन्तः। पृच्छति बुद्धो भगवानायुष्मन्तमानन्दम्। केनैते आनन्द यवाः परिकर्मिताः। अमुकया भदन्त [ब्राह्मणदारिकया। किम]भूत ते आनन्द तया ब्राह्मणदारिकया सार्धमन्तराकथासमुदाहारः। तेन ह्यानन्द यावांस्तेऽभूत्तया ब्राह्मणदारिकया सार्धमन्तराकथासमुदाहारस्तत सर्वमस्माकं विस्तरेणारोचय। अथायुष्मानानन्दो [यत्त]स्याभूत्तया ब्राह्मणदारिकया सार्धमन्तराकथासमुदाहारस्तत्सर्वं भगवतो विस्तरेणारोचयति। एवमुक्ते भगवानायुष्मन्तमानन्दमिदमवोचत्। कस्मात्त्वयानन्द तया दारिकया बुद्धवर्णोदाहरणं न कृतम्। मम भदन्त एवं भवति। गम्भीरा बुद्धधर्माः स्थानमेतद्विद्यते यदसौ दारिका न विज्ञास्यतीति। मया तस्याश्चक्रवर्तिवर्णोदाहरणं कृतम्। क्षीण[1]स्त्वमानन्द। स चेत्त्वया तस्या बुद्धवर्णोदाहरणं कृतमभविष्यत स्थानमेतद्विद्यते यत्तु यामनुत्तरायां सम्यक्संबोधौ अवैवर्तिकं चित्तमुत्पादितमभविष्यत। अपि त्वानन्द भविष्यत्यसौ दारिका राज्ञश्चक्रवतिनः स्त्रीरत्नम्[2]।

1 Tib, 277b, l. 4: མ་ལེགས་པ་ཞིག་བྱས་དེ །

2 Ms. भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षवः पटतोऽक्षतिकं प्रावृत्यान्तर्गृहं

सामन्तकेन शब्दो विस्तृतः। अमुकया ब्राह्मणदारिकया भगवतोऽर्थाय यवाः परिकर्मिताः। सा भगवता राज्ञश्चक्रवर्तिनः स्त्रीरत्नं व्याकृता। इति श्रुत्वा यैः पंचभिर्दारिकाशतैर्द्व्रनै-भिक्षुद्वयोनानां पंचानां भिक्षुशतानां यवाः परिकर्मिताः। ताभिरपि प्रणिधानं कृतम्। वयमस्याः परिवाराः स्याम इति[1]।

यावद्भगवान् यवान्परिभोक्तुमारब्धः आयुष्मानानन्दो विक्लवः[2] अश्रूणि प्रमोक्तुमारब्धः। भगवता तेषु जन्मपरिवर्तेषु करचरणशिरश्छेदादीनि दानानि दत्त्वा त्रिभिः कल्पासंख्येयैः सर्वज्ञत्वमवाप्य इदानीं कोटरयवान्भक्षयतीति। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। कस्मात्त्वमानन्द विक्लवः अश्रूणि प्रमुंचसि। भगवान्भदन्त चक्रवर्तिकुले जातो राज्यमपहाय प्रव्रजितः करचरणशिरादीनि दानानि दत्त्वा त्रिभिः कल्पासंख्येयैः सर्वज्ञत्त्वमवाप्य इदानीं कोटरयवान्भक्षयतीति। भगवानाह। आकांक्षसि त्वमानन्द तथागतस्य दंष्ट्रान्तरविनिर्गतान् यवान् परिभोक्तुम्। आकांक्षामि भगवन्। ततो भगवता आयुष्मत आनन्दाय दंष्ट्रान्तरविनिर्गतानां यवाना[3][मेको दत्तः]। तथाह्यानन्द तथागतस्य

गच्छति। तस्मान्न भिक्षुणा पटस्रोत्यं प्रावृत्यान्तर्गृहं गन्तव्यम्। गच्छति सातिसारो भवति।

1 Tib. 278a, l. 1: འཁོར་དུ་གྱུར་ཅིག །

2 Ibid. l. 2: སྨུག་ནས །

3 Tib. 2789, l. 2: ཚེ་དང་ལྡན་པ་ཀུན་དགའ་བོ་ལ་བྱིན་ནས ། ཚེ་དང་ལྡན་པ་ཀུན་དགའ་བོས་བཟའ་བར་བརྩམས་སོ །

रसाग्र[ग]तानां रसहरणी सुपरिशुद्धा। यदि तथागतः प्राकृतमप्याहारं परिभुंक्ते तदपि तथागतस्यान्नशतरसं संपरिवर्तते।

तैः सामन्तकैः शब्दो विस्तृतः। अग्निदत्तो ब्राह्मणराजो बुद्धप्रमुखं भिक्षुसंघमुपनिमंत्र्यादर्शनपथे स्थितो भगवान् वैरंभ्ये यवान् परिभुंक्ते इति। सामन्तराजैरपि श्रुतं तैरग्निदत्तस्य ब्राह्मणराजस्य दूतसंप्रेषणं कृतम्। ते प्रवेशं न लभन्ते द्वारि स्थिताः। अनाथपिण्डदेन गृहपतिना श्रुतं तेन पंचमात्राणि शकटशतानि पर्णोपगूढस्य शालेः प्रेषितानि। अथ मारस्य पापीयस एतदभवत्। बहुशो मया श्रमणो गौतमो विहेठितो न कदाचिदवतारो लब्धः। अत्रापि तावदस्य प्रहरामि[1] इति विदित्वा आयुष्मन्तमानन्दमात्मानं विनिर्माय तेषां पंचानां शकटशतानां पुरतः स्थित्वा कथयति। भवन्तः कुत्र गम्यते। ते कथयन्ति। [आर्य] आनन्द अग्निदत्तो ब्राह्मणराजो भगवन्तं सश्रावकसंघमुपनिमंत्र्यादर्शनपथे स्थितो भगवान्वैरंभ्ये यवान् परिभुंक्ते इति। अनाथपिण्डदेन गृहपतिना श्रुत्वैतानि पर्णोपगूढस्य शाले[2]र्भगवतोऽर्थाय पंच शकटशतानि प्रेषितानि इति। स कथयति। भवन्तो देवा अभिप्रसन्ना नागा यक्षाः। यदि भगवान् आकाशे पात्रं प्रसारयति तदपि देवास्त्रयस्त्रिंशा दिव्यायाः सुधायाः पूरयन्ति। किमर्थं भगवान् यवान् परिभुंक्ते। निवर्तयथ

1 Tib. 279a, l. 3: ཐལ་བར་བྱའོ །

2 Ibid., l. 6: འབྲས་ས་ལུ་སོག་མའི་སྣ་བྲུར་སྨིན་པ །

इति। ते कथयन्ति। आर्यानन्द संप्रस्थिता वयं किमिदानीं निवर्तामः। गच्छाम इति। मारः संलक्षयति। न शक्यमेते निवर्तयितुम्। उपायसंविधानं कर्तव्यमिति। स उपरिविहायसमभ्युद्गम्य अक्षमालाभिर्वारिधाराभिर्वर्षितुमारब्धः। तेन तावद् दृष्टं यावत्तानि शकटानि नाभिं यावन्निमग्नानि। ततस्ते शाकटिका बलीवर्दान्मुक्त्वा प्रक्रान्ता इति। तत्र भगवता वैरंभ्ये यवाः परिभुक्ताः सार्धं द्वयोनैः पंचभिर्भिक्षुशतैः। आयुष्मद्भ्यां शारिपुत्रमौद्गल्यायनाभ्यां त्रिशंकुके पर्वते वर्षोपगताभ्यां दिव्या सुधा परिभुक्ता।

ततस्तेन सार्थवाहेन त्रैमासस्यात्ययाद्भगवान् सश्रावकसंघो भक्तेनोपनिमंत्रितः। अधिवासितं च भगवता तूष्णींभावेन। स सार्थवाहस्तामेव रात्रिं शुचिं प्रणीतं खादनीयभोजनीयं समुपानीय पूर्ववद्यावद्भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं भगवतः पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः। अनेनाहं कुशलमूलेन राजा भवेयं चक्रवर्ती अश्वाजानेयः पुत्रो युवराजस्तान्यपि पंचाश्वशतानि पंच पुत्रशतानि। या सा दारिका भगवता स्त्रीरत्नं यानि पञ्च दारिकाशतानि तस्याः परिचारिका इति। ततो भगवांस्तस्य सार्थवाहस्य चेतसा चित्तमाज्ञाय तं सार्थवाहमिदमवोचत्। भविष्यसि त्वं सार्थवाह राजा चक्रवर्ती अश्वाजानेयस्ते पुत्रो युवराजस्तान्यपि पंचाश्वशतानि पंच पुत्रशतानि। सा दारिका

1 See above, p. 29.

स्त्रीरत्नम्। तान्यपि द्यूनानि पंच दारिकाशतानि तस्याः परिचारिका इति।

अथ भगवान् त्रैमासस्यात्ययात्कृतचीवरो निष्ठितचीवरः आयुष्मन्तमानन्दमामन्त्रयते। गच्छानन्द अग्निदत्तं ब्राह्मणराजमारोचय। एवं च वद। उषिताः स्मो महाराज तव विजिते। अवलोकितो भव। गच्छाम इति। एवं भदन्त इति। आयुष्मानानन्दो भगवतः प्रतिश्रुत्य येनाग्निदत्तस्य ब्राह्मणराजस्य निवेशनं तेनोपसंक्रान्तः। तेन खलु समयेनाग्निदत्तो ब्राह्मणराजः पुण्याहमागमयंस्तिष्ठति। अथायुष्मानानन्दो दौवारिकं पुरुषमामंत्रयते। एहि त्वं भोः पुरुष येनाग्निदत्तो ब्राह्मणराजस्तेनोपसंक्रम। उपसंक्रम्याग्निदत्तं ब्राह्मणराजमेवं वद। आनन्दो भिक्षुर्द्वारे तिष्ठति देवं द्रष्टुकाम इति। एवमार्य इति दौवारिकपुरुषः आयुष्मत आनन्दस्य प्रतिश्रुत्य येनाग्निदत्तो ब्राह्मणराजस्तेनोपसंक्रान्तः। उपसंक्रम्याग्निदत्तं ब्राह्मणराजमिदमवोचत्। देवार्यानन्दो भिक्षुर्द्वारे तिष्ठति देवं द्रष्टुकामः। स कथयति। अहं भोः पुरुष पुण्याहमागमयंस्तिष्ठामि। आनन्दो भिक्षुः पुण्यमहेशाख्यः। स एव पुण्याहो भवतु।

पञ्चकल्याणश्चायम्। नामकल्याणो रूपकल्याणो वर्णकल्याणः प्रतिभानकल्याणः प्रतिपत्तिकल्याणश्च।

प्रविशतु। को भवन्तमानन्दं वारयतीति। दौवारिकेणायुष्मत आनन्दायैवमारोचितम्। आयुष्मानानन्दः प्रविष्टः। तेऽपि सामन्तराजानां दूतास्तेनैव सार्धं प्रविष्टाः।

अथायुष्मानानन्दोऽग्निदत्तं ब्राह्मणराजमारोग्ययित्वा एकान्ते निषण्णः। एकान्तनिषण्णः आयुष्मानानन्दोऽग्निदत्तं ब्राह्मणराजमिदमवोचत्। भगवांस्ते महाराज आरोग्ययति[1] कथयति च। उषिताः स्मो महाराज तव विजिते त्रैमासीम्। अवलोकितो भव[2]। गच्छाम इति। वन्दे आर्यानन्द बुद्धं भगवन्तम्। कच्चिदार्यानन्द भगवान्वैरंभ्येषु जनपदेषु सुखं वर्षोषितः। न च पिण्डकेन क्लान्त इति। तैः सामन्तराजदूतैरुक्तः। देवोऽप्रत्यक्षितराज्यस्त्वं यो भगवन्तं सश्रावकसंघं त्रैमासीमुपनिमंत्र्यादर्शनपथे व्यवस्थितः। त्रैमासीं कोटरयवाः परिभुक्ता इति। स कथयति। सत्यमार्यानन्द भगवता त्रैमासीं यवाः परिभुक्ताः। सत्यं महाराज। स संमूर्छितः पृथिव्यां निपतितो महता जलपरिषेकेण प्रत्यागतप्राणः अमात्यानाहूय पृच्छति। भवन्तो न मया युष्माकमाज्ञा दत्ता। प्रतिदिवसं पंचानां शतानामाहारं सज्जीकुरु। प्रणीतं प्रभूतं चेति। ते कथयन्ति। अस्ति देवेनैवमाज्ञप्तम्। न त्वाज्ञा दत्ता अमुकस्य दातव्यमिति। अपि तु अद्याप्याहारः सज्जीकृत एव। अथाग्निदत्तो ब्राह्मणराजो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णमग्निदत्तं ब्राह्मणराजं भगवान् धर्म्यया कथया संदर्शयति पूर्ववद्यावत्संप्रहर्ष्य तूष्णीम्। अथाग्निदत्तो ब्राह्मणराजो भगवतः पादयोर्निपत्य भगवन्तमिदमवोचत्।

1 Cf. *Divyā.*, p. 273. see also p. 274, l. 1: आरोग्ययित्युक्तायुष्मानानन्दः प्रक्रान्तः।

2 Cf. *Divyā.*, pp. 4, 128

अत्ययो भगवन्नत्ययः सुगत यथा बालो यथा मूढो यथाव्यक्तो यथाकुशलो योऽहं भगवन्तं सश्रावकसंघं त्रैमासीमुपनिमंत्र्या- दर्शनपथे व्यवस्थितः[1] । तस्य मम भगवन्नत्ययं जानतोऽत्ययं पश्यतः अत्ययमत्ययतः प्रतिगृह्णीष्वानुकम्पामुपादाय । तथ्यं[2] ते[3] महाराज अत्ययमत्ययत आगमा यथा बालो यथा मूढो यथाव्यक्तो यथाकुशलो यस्त्वं तथागतं त्रैमासीमुपनिमंत्र्या- दर्शनपथे व्यवस्थितः । यतस्त्वं महाराज अत्ययं जानास्यत्ययं पश्यसि तं च दृष्ट्वादेशयसि वृद्धिरेव ते प्रतिकांक्षितव्या कुशलानां धर्माणां न हानिः[4] ।

अथाग्निदत्तो ब्राह्मणराजो भगवन्तमिदमवोचत् । अधि- वासयतु मे भगवान् यावज्जीवं चीवरपिण्डपातशयनासनग्लान- प्रत्ययभैषज्यपरिष्कारैः सार्धं भिक्षुसंघेनेति । भगवानाह । तथा- गतो महाराज अल्पायुष्के काले जातः प्रभूतं च कार्यं करणी- यम् । निर्वाणकालसमयश्चेति । नाधिवासयति । यद्येवमधि- वासयतु मे भगवान्सप्तवर्षाणि सप्तमासान्सप्तदिवसान् । तथापि भगवान्नाधिवासयति । अग्निदत्तो ब्राह्मणराजो भगवन्तमिदम- वोचत् । अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति । भगवान् संलक्षयति । यद्यहमस्यैकभक्तकमपि नाधि- वासयामि स्थानमेतद्विद्यते यद्यग्निदत्तो ब्राह्मणराज उष्णं

1 Tib. 282a. l. 5: འདུལ་བ་གཞི། བམ་པོ་སོ་བརྒྱད་པ།

2 Tib. 282a. l. 6: བདེན་དེ།

3 Ms. त्वं

4 Cf. *Divyā*.. p. 617-8; Tib. 282b. ll. 2-5.

शोणितं छर्दयित्वा[1] कालं करिष्यतीति विदित्वा अधिवासितं भगवता तूष्णींभावेन। अथाग्निदत्तो ब्राह्मणराजो भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतोऽन्तिकात् प्रक्रान्तो येन स्वं निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्यामात्यानामंत्रयते भवन्तः कोऽसौ उपायः स्याद्येन सर्वोऽयमाहारो बुद्धप्रमुखेन भिक्षुसंघेन परिभुक्तो भवेदिति। ते कथयन्ति। देव सर्वोऽयं पृथिव्यामाहारस्तीर्यताम्। भिक्षवः पद्भ्यामाक्रमिष्यन्ति। एवं परिभुक्तो भविष्यतीति। तेन पौरुषेयाणामाज्ञा दत्ता। भवन्तो यावानयमाहारः सर्वमेतत्समन्तात् पृथिव्यामाकिरत इति। तैः सर्वं समन्तादाकीर्णम्। अथाग्निदत्तो ब्राह्मणराजस्तामेव रात्रिं शुचि प्रणीतं खादनीयभोजनीयं समुपानीय पूर्ववद्यावद्भगवान् पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। यावदन्यतमेन महल्लेन संजातामर्षेणास्माभिस्त्रैमासीं कोटरयवाः परिभुक्ताः। इदानीमयं कलिराजो विभवं दर्शयतीति विदित्वा खादनीयभोजनीयस्य पृथिव्यामाकीर्णस्योपरि पार्ष्णिप्रहारो दत्तः। ब्राह्मणगृहपतयोऽवध्यायन्ति क्षिपन्ति विवाचयन्ति। आर्य खादनीयभोजनीयं मुखाभ्यवहार्यं पादेन स्पृशन्ति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवान् संलक्ष[य]ति। यः कश्चिदादीनवो[2] भिक्षवः खादनीयभोज-

1 Cf. *Divyā.*, p. 273.

2 Tib. 283b, l. 7: ཉེས་དམིགས་གང་ཅི་བྱུང་བ་དེ་ནི །

नीयं मुखाभ्यवहार्यं पादेन स्पृशन्तीति विदित्वा भिक्षूनामन्त्र-यते स्म । अमुकेन भिक्षवो महल्लभिक्षुणा[1] संजातामर्षेण खादनीय-भोजनीयस्य मुखाभ्यवहार्यस्य पृथिव्यामाकीर्णस्योपरि पार्ष्णि-प्रहारो दत्त इति । ब्राह्मणगृहपतयोऽवध्यायन्ति क्षिपन्ति [वि]वाच-यन्ति । तस्मान्न भिक्षुणा खादनीयभोजनीयं मुखाभ्यवहार्यं पादेनाक्रमितव्यम् । आक्रामति सातिसारो भवतीति ।

अथाग्निदत्तो ब्राह्मणराजः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं सन्तर्प-यति पूर्ववद्यावद् धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय । अथ भगवानग्निदत्तं ब्राह्मणराजं [धर्म्यं]या कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति । अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य उत्थायासनात् प्रक्रान्तः । अथ संबहुला भिक्षव-स्त्रयाणां वार्षिकाणां मासानामत्ययात्कृतचीवरा निष्ठितचीवराः समादाय पात्रचीवरं येन भगवांस्तेनोपसंक्रान्ताः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थात् । एकान्तस्थिताः संबहुला भिक्षवो भगवन्तमिदमवोचन् । उषिताः स्मो भदन्त वैरंभ्ये त्रैमासीम्[2] ।

विस्तरेण वैरंभ्यसूत्रमेकोत्तरिकागमे चतुष्कनिपाते ।

भिक्षवः[3] संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं

1 Tib. 284a, l. 1: དགེ་སློང་རྒན་ཞུགས །

2 Tib. 284b. l. 4-5. The Tib. translation gives here the extract from the *Vairambhasūtra* in extenso. 3 Tib. 284b. l. 5.

पप्रच्छुः। किं भदन्त भगवता कर्म कृतं येन करचरण-शिरश्छेदादिना दानसंभारेण यावद्दीनजनं संतर्प्य कल्पा-संख्येयं यत्त्रयं सत्त्वार्थे[1] आत्मानं परिखेद्यापगतसर्वकार्यो वैरंभ्ये कोटरयवान्परिभुक्तवान्साधं भिक्षुघूर्णैः पंचभिर्भिक्षु-शतैः। आयुष्मन्तौ शारिपुत्रमौद्गल्यायनौ दिव्यां सुधामिति। भगवानाह। तथागतेनैव एतानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि पूर्ववद्यावत्फलन्ति खलु देहिनाम्[2]।

भूतपूर्वं भिक्षवः अशीतिवर्षसहस्रायुषि प्रजायां विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। सः अशीतिभिक्षुसहस्रपरिवारो बन्धुमतीं राजधानीमुपनिश्रित्य विहरति। तेन खलु समयेन बन्धु-मत्यां राजधान्यामन्यतमो गणवाचको ब्राह्मणः पाञ्चशतिकं गणं ब्राह्मणकान्मंत्रान्पाठयति। सर्वलोकस्य चात्यर्थं सत्कृतो गुरुकृतो मानितः पूजितोऽर्हत्संमतः। यत एव विपश्यी सम्यक्संबुद्धो बन्धु-मतीं राजधानीमनुप्राप्तस्तत एव तं न कश्चित्सत्करोति न गुरुकरोति न मानयति न पूजयति। स विपश्यति। तथा-गते सश्रावकसंघेऽत्यर्थमीर्ष्यावान्संवृत्तः। यावत्संबहुलाः शैक्षा-शैक्षा भिक्षवः पूर्वाह्णे निवास्य पात्रचीवरमादाय बन्धुमतीं

1 Tib. 285b, l. 7: བསྐལ་པ་གྲངས་མ་མཆིས་པ་གསུམ་དུ་སེམས་ཅན།

2 See above, p. 30.

राजधानीमनुप्राप्ताः। ततो नानासूपिकरसोपेतस्य भक्तस्य पात्राणि पूरयित्वा निर्गच्छन्ति। तेन च ब्राह्मणेन दृष्टाः पृष्टाश्च। भो भिक्षवः पश्यामि कीदृशः पिण्डपातो लब्ध इति। तैः ऋजुकोऽयं दर्शितः[1]। तत ईर्ष्याप्रकृत्या संजातामर्षेण माणवका अभिहिताः। नार्हन्तीमे मुण्डकाः श्रमणका नानासूपिकरसव्यंजनोपेतं शाल्योदनं परिभोक्तुम्। अर्हन्ति तु कोटरयवान् परिभोक्तुमिति। तैरप्यनुसंवर्णितम्। एवमेतदुपाध्याय एवमेतत्। नार्हन्त्येव इमे मुण्डकाः श्रमणका नानासूपिकरसव्यंजनोपेतं शाल्योदनं परिभोक्तुम्। अर्हन्ति तु कोटरयवान्परिभोक्तुमिति। तत्र च द्वौ माणवकौ श्राद्धौ भद्रौ कल्याणाशयौ। तौ कथयतः। उपाध्याय मैवं वोचः। महात्मान एतेऽर्हन्त्येव दिव्यां सुधां परिभोक्तुं न कोटरयवानिति।

किं मन्यध्वे भिक्षवः। योऽसौ विपश्यितथागतेन गणवाचको ब्राह्मणः अहमेव स तेन कालेन तेन समयेन। यानि तानि [द्रूय]नानि[2] पंच माणवकशतानि एतान्येव पंच भिक्षुशतानि। यौ तौ द्वौ माणवकौ श्राद्धौ भद्रौ कल्याणाशयौ एतावेव तौ शारिपुत्रमौद्गल्यायनौ भिक्षू। यन्मया विपश्यिनः सम्यक्संबुद्धस्य शैक्षाशैक्षाणां श्रावकाणामन्तिके चित्तं प्रदूष्य खरं वाक्कर्म निश्चारितं द्रूयनैश्च पंचभिर्माणवकशतैरनुमोदितं द्वाभ्यां तु नानुमोदितं तस्य कर्मणो विपाकेनैतर्हि तथागतेन वैरंभ्ये कोटरयवाः परि-

1 Tib. 286b, l. 7: དེ་དག་དྲང་པོའི་རང་བཞིན་ཡིན་པས་བསྟན་པ་དང་།

2 Ms. न्यनानि

भुक्ताः सार्धं भिक्षुवृन्दैः पंचभिर्भिक्षुशतैः। शारिपुत्रमौद्गल्यायनाभ्यां तु दिव्या सुधा परिभुक्ता। इति हि भिक्षवः एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः पूर्ववद्यावदेकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम्[1]।

तत्र भगवानायुष्मन्तमानन्दमामंत्रयते स्म। आगमयानन्द येनायोध्येति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत्। अथ भगवान्दक्षिणपंचाले जनपदचारिकां चरन्नयोध्यामनुप्राप्तः अयोध्यायां विहरति नद्या गङ्गायास्तीरे। अथान्यतमो भिक्षुर्येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थितः स भिक्षुर्भगवन्तमिदमवोचत्। साधु मे भगवंस्तथा संक्षिप्तेन धर्मं देशयतु यथाहं भगवतोऽन्तिके संक्षिप्तेन धर्मं श्रुत्वा एको व्यपकृष्टोऽप्रमत्तः आतापी प्रहितात्मा विहरेयम्। एको व्यपकृष्टोऽप्रमत्तः आतापी प्रहितात्मा यदर्थं कुलपुत्राः केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजन्ति तदनुत्तरं ब्रह्मचर्यपर्यवसानं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षात्कृत्वोपसंपद्य प्रवेदयेयम्। क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानामीति। एवमुक्ते भगवान् येन गङ्गा नदी तेन व्यवलोकयन् व्यवलोकयति। अद्राक्षीद्भगवान्नद्या गङ्गायाः स्रोतसा महान्तं दारुस्कन्धमुह्यमानम्। दृष्ट्वा च पुनस्तं भिक्षुमामन्त्रयते पश्यसि त्वं भिक्षो नद्या गङ्गायाः स्रोतसा महान्तं दारुस्कन्धमुह्य-

1 See above, p. 30n.

मानम् । एवं भदन्त स चेदेष न पारिमे तीरे संस्रक्ष्यति । नापारिमे तीरे संस्रक्ष्यति । न मध्ये संस्रक्ष्यति । न स्थले उत्पत्स्यति । न मनुष्यग्राह्यो भविष्यति । नामनुष्यग्राह्यः । नावर्तग्राह्यः । नान्तःपूतीभावं[1] गमिष्यति । एवमेष भिक्षो दारुस्कन्धोऽनुपूर्वेण समुद्रनिम्नो भविष्यति समुद्रप्रवणः समुद्रप्राग्भारः । एवमेव स चेत्त्वं भिक्षो न पारिमे तीरे संस्रक्ष्यसि । पूर्ववद्यावत् । नान्तःपूतीभावं गमिष्यसि । एवं हि त्वं भिक्षो अनुपूर्वेण निर्वाणनिम्नो भविष्यसि निर्वाणप्रवणो निर्वाणप्राग्भारः । नाहं भदन्त जाने किमपारिमं तीरं किं पारिमं तीरम् । किं मध्ये [सं]सदनम्[2] । किं स्थले उत्सदनम्[3] । को मनुष्यग्राहः । कः अमनुष्यग्राहः । [कः आवर्त्तग्राहः ।][4] कोऽन्तःपूतीभाव इति । साधु मे भगवांस्तथा संक्षिप्तेन धर्मं देशयतु यथाहं भगवतोऽन्तिकात्संक्षिप्तेन धर्मं श्रुत्वा पूर्ववद्यावत् नापरमस्माद्भवं प्रजानामीति ।

अपारिमं तीरमिति भिक्षो षण्णामाध्यात्मिकानामायतनानामेतदधिवचनम् । पारिमं तीरमिति षण्णां बाह्यानामायतनानामेतदधिवचनम् । मध्ये संसदनमिति नन्दीरागस्यैतदधिवचनम् । स्थले उत्सदनमिति अस्मिमानस्यैतदधिवचनम् । मनुष्यग्राह इति यथापीहैकः संसृष्टो विहरति गृहस्थप्रव्रजितैः

1 Tib- 288b, l. 1: ཁོང་རུལ་པར་མ་གྱུར་ན །

2 Tib. 288b, l. 4: སྡོགས་པ །

3 Ibid., ll. 5: སྐམ་ལ་བྱུང་བ །

4 Tib. 288b, l. 5: ཀློང་དུ་ནུབ་པ་ནི་ཅི་ལགས །

सहनन्दी सहशोकः। स सुखितेषु सुखितो दुःखितेषु दुःखितः उत्पन्नोत्पन्नेषु किं करणीयेषु समादाय पर्यवसानानुवर्ती भविष्यति। अमनुष्यग्राह इति यथापीहैक इति प्रणिधाय ब्रह्मचर्यं चरतीत्यनेनाहं शीलेन वा व्रतेन वा [तपेन वा][1] ब्रह्मचर्यवासेन वा स्यां [देवो] देवान्यतमो वेति। [2]आवर्तग्राह इति यथापीहैकः शिक्षां प्रत्याख्याय हानायावर्तते। अन्तःपूतीभाव इति यथापीहैको दुःशीलो भवति पापधर्मा अन्तःपूतिरवस्रुतः कषंवकजातः शंखस्वरसमाचारः[3]। अश्रमणः श्रमणप्रतिज्ञोऽब्रह्मचारी ब्रह्मचारिप्रतिज्ञः। एवं हि स चेत्त्वं भिक्षो नापारिमे तीरे संस्रक्ष्यसि पूर्ववद्यावन्निर्वाणप्राग्भारः।

अथ स भिक्षुर्भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः। अथ स भिक्षुर्भगवता अनेन दारुस्कन्धोपमेनाववादेनाववादितः। एको व्यपकृष्टोऽप्रमत्तः आतापी प्रहितात्मा विहरन् यदर्थं कुलपुत्राः केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजन्ति तदनुत्तरं ब्रह्मचर्यपर्यवसानं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षात्कृत्वोपसंपद्य प्रवेदयते ' क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानामीत्याज्ञातवान्। स आयुष्मानर्हन् बभूव सुविमुक्तचित्तः।

1 Tib. 289a, l. 5: དཀའ་ཐུབ་བམ།

2 Ibid. བདག་ལྷ་འམ། ལྷ་གང་ཡང་རུང་བཞིག་དུ་གྱུར་ཅིག།

3 Cf. *Mvyut*. 277. 15-17.

तेन खलु समयेन नन्दो गोपालको भगवतो नातिदूरे स्थितोऽभूत्। दण्डमवष्टभ्य गाश्चारयति। तेन दण्डेनावष्टब्धो मण्डूकः संछिद्यमानेषु चर्मसु मुच्यमानेषु सन्धिषु चित्तमुत्पादयति यद्यहं कायं वा चालयेयं वाचं वा निश्चारयेयं स्यादतो निदानं नन्दस्य गोपालस्य कथाव्याक्षेपमिति विदित्वा भगवतोऽन्तिके चित्तमभिप्रसाद्य कालगतश्चातुर्महाराजिकेषु देवेषूपपन्नः।

अथ नन्दो गोपालको दण्डमेकान्ते उपनिक्षिप्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थितो नन्दो गोपालको भगवन्तमिदमवोचत्। अहं भदन्त नापारिमे तीरे संस्रक्ष्यामि। न पारिमे तीरे संस्रक्ष्यामि। [न मध्ये संस्रक्ष्यामि]। न स्थले उत्स्रक्ष्यामि। न मनुष्यग्राहो भविष्यामि। नामनुष्यग्राहो नावर्तग्राहो नान्तःपूतीभावं गमिष्यामि। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति। तेन हि न[न्देन] स्वामिनां गावो दत्ताः। नो भदन्त। तत्कस्य हेतोः। भदन्त गावस्तरुणवत्सा ज्ञास्यन्ति स्वकस्वकानि गोकुलानि। गमिष्यन्ति स्वकस्वकानि निवेशनानि। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यम्। किं चापि नन्द दहरा गावस्तरुणवत्सा ज्ञास्यन्ति स्वकस्वकानि गोकुलानि। गमिष्यन्ति स्वकस्वकानि निवेशनानि। अपितु करणीयमेतद्गोपालकेन यथापि तत् स्वामिनां भक्ताच्छादनं स्वीकुर्वता।

अथ नन्दो गोपालको भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः। ततो भयं भयमित्युच्चैः शब्दं कुर्वाणः प्रधावितुमारब्धः। अन्तर्मार्गे आत्मीयैः पञ्चभिर्गोपालकशतैर्दृष्टः। ते कथयन्ति। कस्य भयमिति। जातिभयं जराभयं व्याधिभयं मरणभयमिति। तेऽपि तस्य पृष्ठतः प्रधावितुमारब्धाः। तान् दृष्ट्वा अन्येऽपि गोपालका अश्वपालकास्तृणहारकाः काष्ठहारकाः पथाजीवा उत्पथाजीवाश्च मनुष्याः प्रधावितुमारब्धाः। आनुपथिकैर्दृष्टास्तथा विक्रोशन्तः पृष्टाः। किमेतद् भवन्तः। ते कथयन्ति। भयम्। कस्य भयम्। जातिभयं जराभयं व्याधिभयं मरणभयम्। श्रुत्वा तेऽपि निवृत्ताः यावत्कर्वटकसमीपं संप्राप्ताः। ततश्चासौ कर्वटकनिवासी जनकायस्तं महान्तं जनकायं दृष्ट्वा इतश्चामुतश्च सन्त्रस्ताः। केचिन्निष्पलायिताः। केचिद्भाण्डं गोपायन्ति। केचित्सन्नह्यावस्थिताः। अपरे वीरपुरुषास्तैः प्रत्युद्गम्य पृष्टाः। भवन्तः किमेतदिति। ते कथयन्ति। भयम्। कस्य भयम्। जातिभयं जराभयं व्याधिभयं मरणभयमिति। ततोऽसौ कर्वटकनिवासी जनकायः समाश्वस्तः।

तेन खलु समयेनायुष्मान् शारिपुत्रस्तस्यामेव पर्षदि सन्निषण्णोऽभूत्सन्निपतितः। अथायुष्मान् शारिपुत्रश्चिरप्रक्रान्तं नन्दं गोपालकं विदित्वा भगवन्तमिदमवोचत्। कस्माद्भदन्त भगवता नन्दो गोपालकः स्वाख्याते धर्मविनये प्रव्रजितुकामः पुनरप्यगारायोद्योजितः। अस्थानमेतच्छारिपुत्रानवकाशो यन्नन्दो गोपालकः पुनरपि गृही अगारमध्यावत्स्यति सन्निधिकारपरिभोगे

कामान् परिभोक्ष्यते। नेदं स्थानं विद्यते। इदानीं नन्दो गोपालकः स्वामिनां गा अर्पयित्वा आगमिष्यति। स यदर्थं कुलपुत्राः केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजन्ति तदनुत्तरं ब्रह्मचर्यपर्यवसानं दृष्ट एव धर्मे स्वयमभिज्ञायासाक्षात्कृत्वोपसंपद्य प्रवेदयिष्यति क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद्भवं प्रजानामीति।

अथापरेण समयेन नन्दो गोपालकः स्वामिनां गा अर्पयित्वा पञ्चशतपरिवारो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्। अर्पिता मे भदन्त स्वामिनां गावः। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति। लब्धवान् नन्दो गोपालकः पञ्चशतपरिवारः स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्। एवं प्रव्रजितः स आयुष्मान् पूर्ववद्यावत्सुविमुक्तचित्तः।

धर्मता अचिरोपपन्नस्य देवपुत्रस्य देवकन्याया वा त्रीणि चित्तान्युत्पद्यन्ते। कुतश्च्युतः। कुत्रोपपन्नः। केन कर्मणेति। मण्डूकपूर्वी देवपुत्रः पश्यति। तिर्यग्भ्यश्च्युतश्चातुर्महाराजिकेषु देवेषूपपन्नो भगवतोऽन्तिके चित्तमभिप्रसाद्येति। तस्यैतदभवत्। न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रमेयम्। यत्त्वहमपर्युषितपरिवास एव भगवन्तं दर्शनायोपसंक्रमेयमिति। अथ मण्डूकपूर्वी देवपुत्रश्चलविमलकुण्डलधरः पूर्ववद्यावत्सर्वं गङ्गातीरमुदारेणावभासेनावभास्य भगवन्तं पुष्पै-

रवकीर्य भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। अथ भगवान् मण्डूकपूर्विणो देवपुत्रस्याशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं चातुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्। यां श्रुत्वा पूर्ववद्यावदनादिकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। अभिक्रान्तोऽहं भदन्ताभिक्रान्तः। एषोऽहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च। उपासकं च मां धारयाद्याग्रेण यावज्जीवं प्राणोपेतं शरणगतमभिप्रसन्नम्। अथ मण्डूकपूर्वी देवपुत्रो वणिगिव लब्धलाभः शस्यसम्पन्न इव कर्षकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया विभूत्या भगवत्सकाशमागतस्तयैव विभूत्या स्वभवनं गतः।[1]

भिक्षवः पूर्वापररात्रं जागरिकायोगमनुयुक्ता विहरन्ति। तैर्दृष्टो भगवतोऽन्तिके उदारोऽवभासः। यं दृष्ट्वा सन्दिग्धा भगवन्तं पप्रच्छुः। किं भगवन्निमां रात्रिं भगवन्तं दर्शनाय ब्रह्मा सहांपतिः शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः। न भिक्षवो ब्रह्मा सहांपतिर्न शक्रो देवेन्द्रो न चत्वारो लोकपाला मां दर्शनायोपसंक्रान्ताः। अपितु नन्देन गोपालेन दण्डेन वावष्टब्धो मण्डूकः स च्छिद्यमानेषु चर्मसु मुच्यमानेषु सन्धिषु मा नन्दस्य गोपालकस्य धर्मविक्षेपो भविष्यतीति निश्चलस्तूष्णीमवस्थितो ममान्तिके चित्तमभिप्रसाद्य कालगतश्चातुर्महाराजिकेषु देवेषूपपन्नः। स इमां रात्रिं मत्सकाशमुपसंक्रान्तः। तस्य मया धर्मो देशितः। दृष्टसत्यश्च स्वभवनं गत इति।

1 See *Infra*.

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त नन्देन गोपालेन पञ्चशतपरिवारेण कर्म कृतं येन गोपालकेषूपपन्नो भगवतश्च शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। मण्डूकपूर्विणा देवपुत्रेण किं कर्म कृतं येन मण्डूकेषूपपन्नः सत्यदर्शनं च कृतमिति। भगवानाह। तेनैव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसम्भाराणि पूर्ववद्यावत् फलन्ति खलु देहिनाम्।

भूतपूर्वं भिक्षवः अस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोके उदपादि। पूर्ववद्यावत्स वाराणसीं नगरीमुपनिसृत्य विहरति ऋषिवदने मृगदावे। तस्य प्रवचने नन्दो गोपालकः प्रव्रजितः। त्रिपिटो धार्मकथिको युक्तमुक्तप्रतिभानः पंचशतपरिवारः अधिकरणकुशलः[1]। स उत्पन्नोत्पन्नानि संघस्याधिकरणानि व्युपशमयति। तत्र द्वौ भिक्षू स्तब्धौ मानिनौ। न कदाचित्तस्य सकाशमुपसंक्रामतः। तयोरपरेण समयेन परस्परमधिकरणमुत्पन्नम्। तावर्थार्थिनौ तस्य सकाशमुपसंक्रान्तौ पादाभिवंन्दनं कृत्वा कथयतः। इदं चेदं चावयोरधिकरणमुत्पन्नं व्युपशमयेति। स सलक्षयति। यद्यहमनयोरद्यैवाधिकरणं व्युपशमयिष्यामि अर्थार्थिनावेतौ न भूय उपसंक्रमिष्यतः। तेन सर्वसघं संनिपात्य तदधिकरणं संघमध्ये उपनिक्षिप्य न एकान्तीकृतम्। अतः परस्मिन्नपि दिवसे तस्य कर्वटके करणीयमुत्पन्नम्। स

1 See *Divyā.*, p. 493.

तत्र गतः। ततस्ताभ्यां चिरयतीति संघं संनिपात्य तदधिकरणमुपनिक्षिप्तम्। ततः संघेन व्युपशमितम्। यावदसौ त्रिपिटो भिक्षुस्तस्मात् कर्वटकादागतः। मार्गश्रमे प्रतिविनोदिते सार्धंविहार्यन्तेवासिकान् पृच्छति। न तावदर्थप्रत्यर्थिकावागच्छत इति। ते कथयन्ति। उपाध्याय व्युपशान्तं तयोस्तदधिकरणम्। केन व्युपशमितम्। संघेन। यथाकथं तैर्विस्तरेण समाख्यातम्। तेन खरं वाक्कर्म निश्चारितम्। ज्ञायते आयुष्मन्तो गोपालकैर्यथा तदधिकरणं व्युपशमितमिति। तैरप्यनुसंवर्णितमेव मे तदुपाध्याय गोपालकैर्यथा तदधिकरणं व्युपशमितमिति।

किं मन्यध्वे भिक्षवो योऽसौ त्रिपिटो भिक्षुरेष एवासौ नन्दो गोपालकस्तेन कालेन तेन समयेन। यान्यस्य तानि पंच सार्धंविहार्यन्तेवासिकानां शतानि एतान्येव पंच गोपालकशतानि। यदनेन काश्यपस्य सम्यक्संबुद्धस्य श्रावकसंघो गोपालकवादेन समुदाचरितः सार्धंविहार्यन्तेवासिकैश्चानुसंवर्णितं तस्य कर्मणो विपाकेन पंच जन्मशतानि पंचशतपरिवारो गोपालकेषूपपन्नः। यावदेतर्ह्यपि पंचशतपरिवारो गोपालकेष्वेवोपपन्नः। यदनेन पठितं स्वाध्यायितं स्कन्धकौशलं धातुकौशलमायतनकौशलं स्थानास्थानकौशलं च कृतं तेनैतर्हि पंचशतपरिवारेण मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्।

मण्डूकपूर्व्यपि देवपुत्रः काश्यपस्य सम्यक्संबुद्धस्य प्रवचने भिक्षुरासीत्। प्राहाणिकः स जनपदचारिकां चरन् अन्यतमस्मिन्कर्वटके विहारमनुप्राप्तः। स रात्र्याः प्रथमे यामे पर्यङ्कं बद्ध्वा

मनसिकारं वाहयितुमारब्धः[1]। यावत्स्वाध्यायकारका भिक्षवः स्वाध्यायन्ति। शब्दकण्टकानि ध्यानानि। स शब्देन चित्तैकाग्रतां नासादयति। स संलक्षयति स्वाध्यायन्ति एते। मध्यमे यामे निषत्स्यामीति। स मध्यमे यामे उत्थाय निषण्णो यावदन्ये भिक्षवः स्वाध्यायं कुर्वन्ति। स संलक्षयति पश्चिमे यामे निषत्स्यामीति। स पश्चिमे यामे उत्थाय निषण्णो यावदपरे स्वाध्यायं कुर्वन्ति। तस्यावीतरागत्वात्तीव्रं पर्यवस्थानमुत्पन्नम्। स कथयति। इमे श्रमणाः काश्यपीया मण्डूका इव कृत्स्नां रात्रिं रटिता इति।

किं मन्यध्वे भिक्षवो योऽसौ प्राहाणिको भिक्षुरेष एवासौ मण्डूकपूर्वी देवपुत्रः। यदनेन काश्यपस्य सम्यक्संबुद्धस्य श्रावका मण्डूकवादेन समुदाचरिताः। तस्य कर्मणो विपाकेन पंच जन्मशतानि मण्डूकेषूपपन्नो यावदेतर्ह्यपि मण्डूकेष्वेवोपपन्नः। यन्ममान्तिके चित्तं प्रसादितं तेन चातुर्महाराजिकेषु देवेषूपपन्नः। यत्काश्यपे सम्यक्संबुद्धे ब्रह्मचर्यं चरितं तेनेदानीं सत्यदर्शनं कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः पूर्ववद्यावदाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यमिदमवोचत्।

अथ भगवान्नदीं गङ्गामवतीर्णस्तत्र पंचभिर्हंस-मत्स्य-कूर्म-शतैः परिवृतः प्रदक्षिणीकृतश्च। तेषां भगवता त्रिभिः पदैर्धर्मः

1 Tib. 295a, l. 5: ཡིད་ལ་བྱ་བ་བསྒོམས་པར།

देशितः। इति हि भद्रमुखाः सर्वसंस्कारा अनित्याः। सर्वधर्मा अनात्मानः। शान्तं निर्वाणम्। ममान्तिके चित्तमभिप्रसादयत। अप्येवं तिर्यग्योनिं विरागयिष्यथेति। तेषामेतदभवत्। नास्माकं प्रतिरूपं स्याद् यद्वयं भगवतोऽन्तिकात् त्रिभिः पदैर्धर्मं श्रुत्वा आहारमाहरेम इति। ते नाहरणां प्रतिपन्नाः[1]। तीक्ष्णस्तिर्यग्योनिगतानामग्निश्च्युतः[2]। कालगताश्चातुर्महाराजिकेषु देवेषूपपन्नाः। धर्मता खल्वचिरोपपन्नस्य देवपुत्रस्य वा देवकन्याया वा त्रीणि चित्तान्युत्पद्यन्ते। कुतश्च्युतः। कुत्रोपपन्नः। केन कर्मणा इति। ते पश्यन्ति। तिर्यग्भ्यश्च्युताः। चातुर्महाराजिकेषु देवेषूपपन्नाः। पूर्ववद्यावत् मन्दारकाणां पुष्पाणामुत्संगं पूरयित्वा भगवत्सामन्तकेन नदीं गङ्गामवभास्य भगवन्तं पुष्पैराकीर्य भगवत्सामन्तकेनानुपरिवार्यावस्थिताः। भगवता तेषामाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चातुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता पूर्ववद्यावदनादिकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्[3]। ते दृष्टसत्याः कथयन्ति। अभिक्रान्ता वयं भदन्ताभिक्रान्ताः। एते वयं बुद्धं शरणं गच्छामो धर्मं च भिक्षुसंघं च। उपासकांश्चास्मान्धारय। अद्याग्रेण यावज्जीवं प्राणोपेतं शरणगतानभिप्रसन्नान्। अथ ते

1 Tib. 296a. l. 4 : ཁ་ཟས་བཅད་པ་དང་།

2 Ibid. དུད་འགྲོའི་སྐྱེ་གནས་སོང་བ་རྣམས་ནི་མེའི་ཤས་ཆེ་བས།

3 Cf. *Divyā.*, p. 464.

मत्स्य-कच्छप-हंसपूर्विणो देवपुत्रा वणिज इव लब्धलाभाः पूर्व-वद्यावत्स्वभवनं गताः[1] ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त एभिर्हंस-कच्छप-मत्स्यैः कर्म कृतं येन हंस-कच्छप-मत्स्येषूपपन्नाः सत्यदर्शनं च कृतमिति। भगवानाह। एभिरेव भिक्षवो हंस-मत्स्य-कच्छपैः कर्माणि कृतानि उपचितानि लब्धसम्भाराणि परिणतप्रत्ययानि पूर्ववद्यावत्फलन्ति खलु देहिनाम्।

भूतपूर्वं भिक्षवः अस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रा-युषि प्रजायां काश्यपो नाम शास्ता लोके उदपादि पूर्ववद्या-वत्स वाराणसीं नगरीमुपनिश्रृत्य विहरति ऋषिवदने मृग-दावे। तस्यैते शासने प्रव्रजिता अभूवन्। तत्रैतैर्भिर्भिक्षुभिः क्षुद्रानुक्षुद्राणि शिक्षापदानि खंडितानि। तस्य कर्मणो विपाकेन हंस-मत्स्य-कूर्मेषूपपन्नाः। यन्ममान्तिके चित्तमभिप्रसादितं तेन देवेषूपपन्नाः। यत्काश्यपे सम्यक्संबुद्धे ब्रह्मचर्यं चरितं तेन सत्य-दर्शनं कृतम्। इति हि भिक्षवः एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः पूर्ववद्यावदाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षि-तव्यमिदमवोचत्।

अथ भगवान्नदीं गङ्गामुत्तीर्णः पंचमात्रैः प्रेतशतैः परिवृतो दग्धस्थूणाकृतिभिरस्थियन्त्रवदुच्छ्रितैः स्वकेशसंछन्नैः पर्वतो-पमकुक्षिभिः सूचीच्छिद्रोपममुखैरादीप्तैः प्रदीप्तैः संप्रज्वलितैः

1 See above, p. 54.

एकज्वालीभूतैः। ते कृतकरपुटा भगवन्तमूचुः। वयं भदन्त प्रेता विनिपतितशरीराः पूर्वकर्मापबाधेन पानीयं नासादयामः। कुतो भक्तस्य दर्शनम्। त्वं महाकारुणिकोऽस्मभ्यं पानीयमनुप्रयच्छेति। भगवता तेषां गङ्गोपदर्शिता।

एषा हि शीतलजला सुसमृद्धतोया
भागीरथी वहति सर्वजनोपभोग्या।
ग्रामांश्च राष्ट्रनगराणि च तर्पयन्ती
केदारशालिकुमुदोत्पलपङ्कजानि॥

प्रेताः कथयन्ति।

एषास्माकं वहति हि शुष्कतोया
भागीरथी सर्वजनोपभोग्या।
पश्याम एतां रुधिरमलेन पूर्णां
रक्षन्ति चैनां सपरशुदण्डहस्ताः॥ इति।

भगवान् गङ्गादेवतामाह।

त्वं ग्रामराष्ट्रनगराण्यनुतर्पयन्ती
केदारशालिकुमुदोत्पलपङ्कजानि[1]।
कस्मान्न तर्पयसि तीव्रतृषाभिभूतान्
कृपा न तव बालजनस्य दुःखैः॥ इति।

गङ्गादेवता प्राह।

नाहं भयान्न परुषादपि वा जनस्य
शाठेन वापि विषमं जलमुत्सृजामि।

1 Tib. 298a. 1.7 : ཞིང་རྔང་ས་ལུ་ཀུ་མུ་ད་དང་ཨུཏྤལ་སྐྱེན།

एषा तु दुष्कृतमहावरणावृतानां
शोषं जलं व्रजति कोऽत्र ममापराधः ॥ इति ।

तत्र भगवानायुष्मन्तं महामौद्गल्यायनमामंत्रयते । संतर्पय मौद्गल्यायन प्रेतानिति । एवं भदन्त इति आयुष्मान्महामौद्गल्यायनो भगवतः प्रतिश्रुत्य प्रेतान् सन्तर्पयितुमारब्धः । तत्र प्रेताः सूचीमुखत्वान्न शक्नुवन्ति मुखं विवर्तयितुम् । ततो भगवता तेषामृद्ध्या मुखं विवृतम् । आयुष्मता महामौद्गल्यायनेन पानीयं दत्तम् । तैस्तृषातुरैः प्रभूतं पीतम् । उदराणि स्फुटितानि । ततो भगवतोऽन्तिके चित्तमभिप्रसाद्य कालगताः । पूर्ववद्दृष्टसत्याः स्वभवनं गताः ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । किं भदन्त एभिः प्रेतैः कर्म कृतं येन प्रेतेषूपपन्नाः । किं कर्म कृतं येन देवेषूपपन्नाः । सत्यदर्शनं च कृतमिति । भगवानाह । एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि पूर्ववद्यावत्फलन्ति खलु देहिनाम् ।

भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता उदपादि । पूर्ववद्यावत्स वाराणसीं नगरीमुपनिश्रृत्य विहरति ऋषिवदने[1] मृगदावे । तस्य श्रावकाश्छन्दकभिक्षणं[2] कृत्वा बुद्धधर्मसंघेषु कारान्कुर्वन्ति । यदा भगवतः काश्यपस्य सम्यक्संबुद्धस्य शासनं न वैस्तारिकं

1 Tib. 299a. 1, 4: དྲང་སྲོང་སྨྲ་བ།

2 Ibid. l, 5 : དད་པ་ལས་བསླངས་ནས། 

तदाल्पाश्छन्दयाचका[1] भिक्षवः। यदा तु वैस्तारिकं तदा बहवश्छन्दयाचका भिक्षवः संवृत्ताः। यावदन्यतमस्मिन्संस्थागारे पंचोपासकशतानि संनिषण्णानि संनिपतितानि केनचिदेव करणीयेन। संबहुलाश्च भिक्षवश्छन्दयाचकास्तेषां सकाशमुपसंक्रान्ताः समादापयितुकामाः। ते तीव्रेण पर्यवस्थानेन खरं वाक्कर्म निश्चारितम्। इमे श्रमणाः काश्यपीयाः प्रेतोपपन्ना इव नित्यं प्रसारितकरा इति।

किं मन्यध्वे भिक्षवो यानि तानि पंचोपासकशतानि एतान्येव तानि पंच प्रेतशतानि। यदेभिः काश्यपस्य सम्यक्संबुद्धस्य श्रावकाः प्रेतवादेन समुदाचरितास्तस्य कर्मणो विपाकेन पंच जन्मशतानि प्रेतेषूपपन्नाः। यावदेतर्ह्यपि प्रेतेष्वेवोपपन्नाः। यन्ममान्तिके चित्तं प्रसादितं तेन देवेषूपपन्नाः। यत्काश्यपे सम्यक्संबुद्धे शरणागमनशिक्षापदानि गृहीतानि तेन सत्यदर्शनं कृतम्। इति हि भिक्षवः एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः पूर्ववद्यावदाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यमिदमवोचत्।

अथ भगवान्नदीं गङ्गामुत्तीर्य दक्षिणेन नागावलोकितेन नदीं गङ्गां निरीक्षते। भिक्षवो बुद्धं भगवन्तं पप्रच्छुः। किमर्थं भदन्त भगवान्परावृत्य[2] नदीं गङ्गां निरीक्षत इति। भगवानाह।

1 Ibid. l. 7 : དད་པ་འདྲི་བའི་དགེ་སློང་།

2 Tib. 300a. l. 2: ཅེའི་སླད་དུ་གཡས་ཕྱོགས་ནས་ཆུ་བོ་གང་གཱ་ལ་གཟིགས་པར་མཛད།

इच्छथ भिक्षवो नद्या गङ्गाया उत्पत्तिं श्रोतुम्। एतस्य भगवन्काल एतस्य सुगत समयो यद्भगवान्नद्या गङ्गाया उत्पत्तिं देशयेद् भिक्षवः श्रोष्यन्ति[1]।

भूतपूर्वं भिक्षवः पिण्डवंशो नाम राजा बभूव। धार्मिको धर्मराजो धर्मेण राज्यं कारयति। तस्य जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्चाकीर्णबहुजनमनुष्याश्च सदा पुष्पफल-वृक्षाः देवः कालवर्षी। शस्यवती वसुमती प्रशान्तकलिकलह-डिम्बडमरतस्कररोगापगता। मनुष्या नित्यं धर्मपरायणाः। यावदसौ राजा संप्राप्ते वसन्तकालसमये संपुष्पितेषु पादपेषु हंसक्रौंचमयूरशुकशारिकाकोकिलजीवंजीवकनिर्घोषिते वनषण्डे अन्तःपुरपरिवृत उद्यानभूमिं संप्रस्थितः। यावदन्यतमः पुरुषो वलीपलितोत्तमाङ्गः परिजीर्णशरीरावयवः परिणतेन्द्रियः कृशोऽल्पस्थामो मन्दमन्दचारतया दण्डमवष्टभ्य गच्छति। ततस्तेन राज्ञा अमात्याः पृष्टाः। क एष भवन्तः पुरुषो वलीपलितोत्तमाङ्गः पूर्ववद्यावद्दण्डमवष्टभ्य गच्छतीति। तैः समाख्यातम्। देव संस्कारपरिक्षयादेष जीर्णो वृद्ध इत्युच्यत इति। राजा कथयति। अहमपि भवन्त एवंधर्मो भविष्यामीति। ते कथयन्ति। देव साधारण एष धर्म इति। ततो राजा दुर्मनाः संप्रस्थितः। पुनरपि पुरुषं पश्यत्युत्पाण्डोत्पाण्डुकं स्फुटितपरुषगात्रं पर्वतोपमकुक्षिं व्रणपूयोत्कीर्णैरङ्गप्रत्यङ्गावधारिभिः पट्टकोपनिबद्धैः दीर्घदीर्घैः प्रश्वसन्तन्दण्डमवष्टभ्य खंजमानगतिं संप्रस्थितं दृष्ट्वा

1 Tib. 300a. 1. 4 marks here འདུལ་བ་གཞི། བམ་པོ་སོ་དགུ་པ།

च पुनरमात्यानामंत्रयते। क एष भवन्तः पुरुष उत्पाण्डोत्पाण्डुकः पूर्ववद्यावत् खंजमानोऽभिसंप्रस्थित इति। ते कथयन्ति। देव एष व्याधितो नाम। राजा कथयति। अहमपि भवन्तः एवंधर्मो भविष्यामीति। अमात्याः कथयन्ति। देव साधारण एष एव धर्मो दुष्कृतकर्मकारिणां पूर्वकर्मापराधाद्भवतीति। राजा संलक्षयति। सर्वथा पापं न कर्तव्यमिति विदित्वा संप्रस्थितः। पुनरपि पश्यति। नीलपीतलोहितावदातैर्वस्त्रैः शिविकामलंकृतां छत्रध्वजपताकाशंखपटहस्त्रीपुरुषदारकदारिकाभिराकीर्णां चतुर्भिः पुरुषैरुत्क्षिप्ताम् उल्कां च पुरस्तान्नीयमानां काष्ठव्यग्रहस्तैः पुरुषैः पृष्ठतोऽनुबद्धां हा तात हा भ्रातः हा पितः हा स्वामिन्निति च समन्तादारोदनशब्दं श्रुत्वा च पुनरमात्यानामंत्रयते। किमेषा भवन्तः शिविका नीलपीतलोहितावदातैर्वस्त्रैः पूर्ववद्यावदारोदनशब्द इति। अमात्याः कथयन्ति। एष देव मृतो नाम इति। राजा कथयति। अहमपि भवन्तः एवंधर्मो भविष्यामीति। ते कथयन्ति। देव एषोऽपि साधारणो धर्म इति। ततो जीर्णातुरमृतसंदर्शनात् संविग्नमना एवंरूपाभोगाः परित्यक्तव्या इति प्रतिनिवृत्य शोकागारं प्रविश्यावस्थित इति।

तस्य विजिते वेलामो नाम ब्राह्मण आढ्यो महाधनो महाभोगो वेदवेदांगपारगः। तेन श्रुतं यथा राजा जीर्णातुरमृतसंदर्शनादुद्विग्नः शोकागारं प्रविश्यावस्थित इति। श्रुत्वा च पुनरनेकैर्ब्राह्मणशतसहस्रैः परिवृतः सर्वश्वेतं वडवारथ-

मभिरुह्य सौवर्णेन दण्डकमण्डलुना धार्यमाणेन येन राजा पिण्डवंशस्तेनोपसंक्रान्तः। अमात्यैः राज्ञे निवेदितम्। देव वेलामो ब्राह्मणो द्वारे तिष्ठति। ततो राजा निर्गत्य अर्थाधिकरणे निषण्णः। ब्राह्मणो वेलामो जयेनायुषा च वर्धयित्वा निषण्णः कथयति। किमर्थं देवः शोकागारे प्रविश्यावस्थित इति। राज्ञा यथावृत्तं सर्वं वेलामाय ब्राह्मणाय विस्तरेणारोचितम्। स कथयति। देवः स्वकर्मफलभोगी। नात्र शोकः करणीयः। सन्ति सत्त्वाः सुकृतकर्मकारिणः सन्ति दुष्कृतकर्मकारिणः [[1]सन्ति चोभयकर्मकारिणः]। चक्रवर्तिनस्तु नित्यं सुकृतकर्मकारिणः सन्तो देवेषूपपद्यन्ते। देवोऽपि चक्रवर्ती। मनुष्यप्रतिविशिष्टं सुखमनुभूय दिव्यं सुखमनुभविष्यतीति। अपि तु देव यज्ञ इष्टव्यः स्वर्गसोपानभूत इति। ततो राज्ञा अमात्यानामाज्ञा दत्ता। भवन्तः सर्वविजिते घंटावघोषणं कारयत। राजा निरर्गं [लं][2] यज्ञं यजति। भवद्भिरागत्य परिभोक्तव्यमिति। ततो दानशाला प्रज्ञप्ता। अन्नमन्नार्थिभ्यो दीयतां पानं पानार्थिभ्यः। तत्राचामेन[3] परिस्रवमाणेन गर्तः कृतः। यत्रासौ तप्तः शीतीभवति। अनवतप्तः अनवतप्त इति संज्ञा संवृत्ता। तस्याचामेन तण्डुलाम्बुना च द्वादशवार्षिकेण संपूर्यमाणस्य वृद्धिः संवृत्ता। तत इयं मुखेन नदी प्रसृता। आचामनदीति संज्ञा संवृत्ता इति।

1 See Tib, 302a, l. 4.

2 Tib. 302a, l. 7: གཏན་པ་མེད་པ །

3 Tib. 302b, l. 1: འབྲས་ཁ

उद्दानम् ।

कुमारवर्धनं क्रौंचानमङ्गदिका मणिवती।
सालबला सालिबला सुवर्णप्रस्थश्च साकेता ॥
पेया तोयिका च श्रावस्ती अनवतप्तः ।
नगरबिन्दुश्च वैशाली भवति पश्चिमा ॥

अथ भगवान्कुमारवर्धनमनुप्राप्तः । कुमारवर्धने आयुष्मन्तमानन्दमामन्त्रयते । अस्मिन्नेवानन्द प्रदेशे उपोषधो नाम राजा जातः। अत्रैव चाभिवृद्धः। तेनास्य नगरस्य कुमारवर्धनं कुमारवर्धनमिति संज्ञा संवृत्ता ।

क्रौंचानमनुप्राप्तः। तत्र भगवानायुष्मन्तमानन्दमामंत्रयते। अस्मिन्नानन्द क्रौंचाने उपोषधस्य राज्ञो हस्तिनागेन क्रौंचयता शब्दः कृतः क्रौंचानं क्रौंचानमिति संज्ञा संवृत्ता।

अङ्गदिकामनुप्राप्तः। अङ्गदिकायामन्यतमस्मिन्प्रदेशे स्मितमकार्षीत्। विस्तरेण चतुर्बुद्धासनं पूर्ववत्।

मणिवतीमनुप्राप्तः । मणिवत्यामायुष्मन्तमानन्दमामंत्रयते। अस्यामानन्द मणिवत्यां बोधिसत्त्वेन बहुभिर्मणिभिर्यज्ञो यष्टः। मणिवती मणिवतीति संज्ञा संवृत्ता।

सालबलामनुप्राप्तः। सालबलायामन्यतमस्मिन् प्रदेशे स्मितमकार्षीत्। विस्तरेण चतुर्बुद्धासनं पूर्ववत।

सालिबलामनुप्राप्तः । सालिबलायामन्यतमस्मिन् प्रदेशे स्मितमकार्षीत्। विस्तरेण चतुर्बुद्धासनं पूर्ववत्।

सुवणप्रस्थमनुप्राप्तः। अस्मिन्नानन्द सुवर्णप्रस्थे बोधिसत्त्वेन बहुसुवर्णको यज्ञो यष्टः। अप्येदानीं ब्राह्मणैः प्रस्थेन सुवर्णो भाजितः। सुवर्णप्रस्थः सुवर्णप्रस्थ इति संज्ञा संवृत्ता।

साकेतामनुप्राप्तः। साकेतायामायुष्मन्तमानन्दमामंत्रयते। अस्यामानन्द साकेतायामुपोषधो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च। तस्यापरेण समयेन मूर्ध्नि पिटको जातो मृदुः सुमृदुः तद्यथा तूलपिचुर्वा कर्पासपिचुर्वा न च किंचिदाबाधं जनयति। स परिपाकत्वात्स्फुटितः। कुमारो जातः। अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णः पूर्ववद्यावत् सर्वाङ्गप्रत्यंगोपेतः। मूर्ध्नि जातो मूर्ध्नि जात इति मूर्धातो मूर्धात इति संज्ञा संवृत्ता। उपोषधस्य राज्ञः षष्टिः स्त्रीसहस्राणि। जातः कुमारोऽन्तःपुरं प्रवेशितः। सहदर्शनादेव सर्वासां स्त्रीणां स्तनाः प्रस्रुताः। एकैका कथयति मां धायतु मां धायत्विति[1] मान्धाता मान्धातेति च संज्ञा संवृत्ता। तत्र केचिन्मूर्धात इति संजानते केचिन्मान्धातेति[2]।

मान्धातुः कुमारस्य जनपदगतस्य उपोषधो राजा ग्लानः संवृत्तः। स मूलगण्डपत्रपुष्पफलभैषज्यैरुपस्थीयते। तथाप्यसौ हीयत एव। तेनामात्यानामाज्ञा दत्ता। भवन्तः शीघ्रं कुमारं राज्याभिषेकेणाभिषिंचत। एवं देव इति अमात्यैर्दूतसंप्रेषणं कृतम्। उपोषधो राजा ग्लानः। तेनाज्ञा दत्ता कुमारं शब्दयत राज्याभि-

1 Tib. 303b. 1. 5: ང་ལས་ནུ།

2 Cf. *Divyā.*, p. 210.

षेकं प्रत्यनुभवत्विति । तदर्हति कुमारः शीघ्रमागन्तुमिति । स संप्रस्थित उपोषधश्च राजा कालगतः । ततोऽमात्यैः पुनरपि तस्य दूतसंप्रेषणं कृतम् । कुमार पिता ते कालगतः । आगच्छ राज्यं प्रतीच्छेति । मान्धाता कुमारः संलक्षयति । यदि मम पिता कालगतः किं तत्र गच्छामीति विदित्वा तत्रैवावस्थितः । अमात्यैः पुनरपि संभूय अग्रामात्यः प्रेषितः । तेन गत्वाभिहितः । कुमार आगच्छ राज्यं प्रतीच्छ इति । स कथयति । मम धर्मेण राज्यं प्राप्तम् । इहैव राज्याभिषेक आगच्छत्विति । अमात्यैः संदिष्टम् । देव राज्याभिषेके प्रभूतेन प्रयोजनम् । रत्नशिलया सिंहासनेन च्छत्रेण पट्टेन मुकुटेन । अधिष्ठानमध्ये च राज्याभिषेकः क्रियते । तदर्हति कुमारः इहैवागन्तुमिति । स कथयति । यदि मम धर्मेण राज्यं प्राप्तम् । इहैव सर्वमागच्छत्विति । मान्धातुः कुमारस्य दिवौकसो नाम यक्षः पुरोजवः । तेन रत्नशिला सिंहासनं तत्रैवानीतम् । आधिष्ठानिकाश्च च्छत्रं पट्टं मुकुटं चादाय स्वयमेवागताः । अधिष्ठानं स्वयमागतं स्वयमागतमिति साकेता साकेता इति संज्ञा संवृत्ता[1] ।

तत्र भगवानायुष्मन्तमानन्दमामंत्रयते । आगमयानन्द येन श्रावस्ती इति । एवं भदन्त इति आयुष्मानानन्दो भगवतः प्रत्यश्रौषीत् । अथ भगवान् येन श्रावस्ती तेन चारिकां चरन् प्रक्रान्तो यावदन्यतमस्मिन् प्रदेशे ब्राह्मणश्छिन्नभक्तको हलं वाहयति । तस्यार्थाय दारिका पेयामादायागता । भगवांश्च तं प्रदेश-

1 Cf. *Divyā.*, p. 211.

मनुप्राप्तः। ददर्श स ब्राह्मणो बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलंकृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालंकृतं सूर्यसहस्रातिरेकप्रभं जंगममिव रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनात्तस्य भगवति प्रसाद उत्पन्नः। न तथा द्वादशवर्षाभ्यस्तः शमथश्चित्तस्य कल्पतां[1] जनयति। अपुत्रस्य वा पुत्रप्रतिलाभो दरिद्रस्य वा निधिदर्शनं राज्याभिनन्दिनो वा राज्याभिषेको यथोपचितकुशलमूलस्य सत्त्वस्य तत्प्रथमतो बुद्धदर्शनम्। स तां पेयामादाय लघु लघ्वेव येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत।

इयं भो गौतम पेया इयमस्ति ममान्तिके।
अनुकम्पं पिब एतद्भगवन् गौतमः [2]पेयाम्॥ इति।

ततो भगवता तस्य ब्राह्मणस्य कूपो दर्शितः। स चेत्ते ब्राह्मण परित्याज्याः अस्मिन् जीर्णकूपे प्रक्षिप इति। तेन तस्मिन् जीर्णकूपे प्रक्षिप्ताः। स जीर्णकूपो वाष्पायमानः पेयापूर्णो यथापि तद्बुद्धानां बुद्धानुभावेन देवतानां च देवतानुभावेन। ततो भगवता स ब्राह्मणोऽभिहितः। चारय ब्राह्मण [2]पेयामिति। स चारयितुमारब्धः। भगवता तथाधिष्ठिता यथा सर्वसंघेन पेया। जीर्णकूपो वाष्पायमानस्तथैव [2]पेयापूर्णोऽवस्थितः। ततोऽसौ ब्राह्मणो भूयस्या मात्रयाभिप्रसन्नो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा

1 Tib. 305a, l. 3: རུང་བ =योग्यता।

2 Ms. पी०

तादृशी चातुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता पूर्ववद्याव-दनाद्यकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोता-पत्तिफलं साक्षात्कृतम्। अभिक्रान्तोऽहं भदन्ताभिक्रान्तः। एषोऽहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं च। उपासकं च मां धारय अद्याग्रेण यावज्जीवं प्राणोपेतं शरणगतमभिप्रसन्नम्। अथासौ ब्राह्मणो वणिगिव लब्धलाभः शस्यसंपन्न इव कार्षिकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो भगवतो भाषितमभि-नन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्-प्रक्रान्तो यावत्क्षेत्रं गतः। पश्यति तस्मिन् क्षेत्रे सौवर्णान्यवान् संपन्नान्। दृष्ट्वा च पुनर्विस्मयोत्फुल्ललोचनो गाथां भाषते।

अहो गुणमयं क्षेत्रं सर्वदोषविवर्जितम्।
अद्यैवोप्तं मया बीजमद्यैव फलदायिकम्॥ इति।

ततोऽसौ ब्राह्मणस्त्वरितं राज्ञः सकाशमुपसंक्रान्तः। उप-संक्रम्य जयेनायुषा च वर्धयित्वा राजानमुवाच। देव मया यवाः प्रकीर्णास्ते सौवर्णाः संवृत्ताः। तत्राधिष्ठायिकेन प्रसादः क्रियता-मिति। राज्ञा अधिष्ठायिकोऽनुप्रेषितः। ब्राह्मणेन राशीकृत्वा भाजिताः। राजभागः स्वाभाविका यवाः संवृत्ताः। अधिष्ठायि-केन राज्ञे निवेदितम्। राज्ञा समादिष्टम्। पुनर्भाजयत इति। पुनर्भाजितम्। तथैव राजभागः स्वाभाविका यवाः संवृत्ताः। एवं यावत्सप्तकृत्वो भाजितम्। तथैव राजा कुतूहलजातः स्वयमेव गतः पश्यति। तथैव तेनासौ ब्राह्मणोऽभिहितः। ब्राह्मण तवैतत्-पुण्यनिर्जातम्। अलं राजभागे[न]। यत्तवाभिप्रेतं तन्ममानुप्रय-

च्छेति। ततस्तेन ब्राह्मणेन परितुष्टेन यद्दत्तं ते सौवर्णयवाः संवृत्ताः।

ततो भगवान्संप्रस्थितो यावदन्यतमस्मिन्प्रदेशे पंच कार्षिकशतान्युत्पाण्डोत्पाण्डुकानि स्फुटितपाणिपादानि शणशाटीनिवासितानि लाङ्गलानि वाहयन्ति। तेऽपि बलीवर्दा व्रणपूयोत्कीर्णैः[1] प्रतोदयष्टिभिः क्षतविक्षतगात्रा मुहुर्मुहुर्विश्वसन्तो वहन्ति। ददृशुस्ते कार्षिका बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः पूर्ववद्यावदुपचितकुशलमूलस्य सत्त्वस्य तत्प्रथमतो बुद्धदर्शनम्[2]। ततो येन भगवांस्तेनोपसंक्रान्ताः। अद्राक्षीद्भगवांस्तान् कार्षिकान्। दूरादेव दृष्ट्वा च पुनर्विनयापेक्षया मार्गादपक्रम्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। अथ ते कार्षिका भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। ततो भगवता तेषां कार्षिकाणामाशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चातुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता पूर्ववद्यावदनाद्यकालोपचितं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। ते दृष्टसत्या येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचन्। लभेम वयं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेम वयं भगवतोऽन्तिके ब्रह्मचर्यमिति। ते भगवता एहि भिक्षुकया प्रव्राजिताः पूर्ववद्यावन्नैव स्थिता बुद्धमनोरथेन। तेषां भगवता अववादो दत्तः। ते व्यायच्छमानैः पूर्ववद्यावदभिवाद्याश्च संवृत्ताः[3]।

1 See Tib. 306b l. 5.

2 See above p. 69.

3 See *Divyā.*, p. 48: एहीति चोक्ता हि तथागतेन मुण्डाश्च संघाटिपरीतदेहाः। सद्यः

ते बलीवर्दा योक्त्राणि वरत्राणि च्छित्त्वा येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः [पादौ शिरसा वन्दित्वा] समन्तकेन परिवार्यावस्थिताः। तेषां भगवता त्रिभिः पदैर्धर्मो देशितः। पूर्ववद्यावद्यथा गंगावतारे हंसमत्स्यकूर्माणां यावदृष्टसत्याः स्वभवनं गताः[1]।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त एभिः कार्षिकपूर्वकैर्भिक्षुभिः कर्म कृतं येन कार्षिकाः संवृत्ता भगवतश्च शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। तैर्बलीवर्दपूर्वकैर्देवपुत्रैः किं कर्म कृतं येन बलीवर्देषूपपन्नाः सत्यदर्शनं च कृतमिति। भगवानाह। एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि पूर्ववद्यावत्फलन्ति खलु देहिनाम्।

भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम शास्ता लोके उदपादि। पूर्ववद्यावत्स वाराणसीं नगरीमुपनिश्रृत्य विहरति ऋषिवदने मृगदावे। तस्य शासने एतानि पंच कार्षिकशतानि प्रव्रजितान्यभूवन्। तत्र एभिर्न पठितं न स्वाध्यायितं न मनसिकारो वाहितः किन्तु श्रद्धादेयं भुक्त्वा भुक्त्वा संगणिकाभिरतैः कौसीद्येनातिनामितम्।

किं मन्यध्वे भिक्षवो यानि तानि पंच भिक्षुशतानि एतानि पंच कार्षिकशतानि। योऽसौ विहारस्वामी स एवासौ

प्रशान्तेन्द्रिया एव तस्थुस्तैव स्थिता बुद्धमनोरथेन। तैर्युज्यमानैर्घट्टमानैर्व्यायच्छमानैरिदमेव पञ्चगण्डकं पूर्ववत् यावदभिवाद्याश्च संवृत्ताः।

1 See above, p. 58.

गृहपतिः ।`यदेते कार्षिका यदेभिर्विहारस्वामिसन्तकं श्रद्धादेयं परिभुज्य न पठितं न स्वाध्यायितं नापि मनसिकारो वाहितः किन्तु संगणिकाभिरतैः कौसीद्येनातिनामितं तेन कर्मणा पंच जन्मशतानि तस्य विहारस्वामिनः कार्षिकाः संवृत्ताः। यावदेतर्ह्यपि तस्यैव कार्षिका जाताः । यदेभिः काश्यपस्य सम्यक्संबुद्धस्य शासने प्रव्रज्य ब्रह्मचर्यं चरितं तेनैतर्हि मम शासने प्रव्रज्य सर्वक्लेश-प्रहाणादर्हत्त्वं साक्षात्कृतम् ।

तेऽपि वलीवर्दपूर्विणो देवपुत्राः काश्यपस्यैव सम्यक्संबुद्धस्य शासने प्रव्रजिता आसंस्तत्रैव क्षुद्रानुक्षुद्राणि शिक्षापदानि खंडितानि । तेन कर्मणो विपाकेन वलीवर्देषूपपन्नाः । यन्ममान्तिके चित्तमभिप्रसादितं तेन देवेषूपपन्नाः । यत्काश्यपे सम्यक्संबुद्धे ब्रह्मचर्यं चीर्णं प्रतिपालितं तेनेदानीं देवपुत्रभूतैः सत्यदर्शनं कृतम् । इति हि भिक्षवः एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः पूर्ववद्यावदाभोगः करणीयः । इत्येवं वो भिक्षवः शिक्षितव्यमिद-मवोचत् ।

तत्र[1] भगवानायुष्मन्तमानन्दमामन्त्रयते । आगमयानन्द येन तोयिका । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रत्यश्रौषीत् । अथ भगवांस्तोयिकामनुप्राप्तः । तस्मिंश्च प्रदेशे ब्राह्मणो लाङ्गलं वाहयति । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुष-लक्षणैः समलंकृतमशीत्या चानुव्यंजनैर्विराजितगात्रं व्यामप्रभालं-

1 The *Divyā*. (p. 76) should have separated this portion of the story from the preceding one and named it as तोयिकामहावदानम् instead of tagging it on to इन्द्रनामब्राह्मणावदानम् ।

कृतं सूर्यसहस्रातिरेकप्रभं जंगममिव रत्नपर्वतं समन्ततो भद्रकम्। स संलक्षयति। यदि भगवन्तं गौतममुपेत्याभिवादयिष्यामि कर्मपरिहानिर्मे भविष्यति। अथ नोपेत्याभिवादयिष्यामि पुण्यपरिहानिर्मे भविष्यति। कोऽसावुपायः स्याद्येन मे न कर्मपरिहानिः स्यान्नापि पुण्यपरिहानिरिति। तस्य बुद्धिरुत्पन्ना। अत्रस्थ एवाभिवादनं करोमि। एवं न कर्मपरिहानिर्भविष्यति नापि पुण्यपरिहानिरिति। तेन यथागृहीतयैव प्रतोदयष्ट्या तत्रस्थेनैवाभिवादनं कृतम्[1]। अभिवादये बुद्धं भगवन्तमिति।

तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। क्षूण आनन्द एष[2] ब्राह्मणः। [अनेनोपक्रम्यास्मिन् प्रदेशे अभिवादने कृते] सति प्रत्यात्मं ज्ञानदर्शनं प्रवर्तते। एतस्मिन् प्रदेशे काश्यपस्य सम्यक्संबुद्धस्याविकोपितोऽस्थिसंघातस्तिष्ठतीति। अहमनेनोपक्रम्य वन्दितो भवेयम्। एवमनेन द्वाभ्यां सम्यक्संबुद्धाभ्यां वन्दना कृता भवेत्। तत्कस्य हेतोः। अस्मिन्नानन्द प्रदेशे काश्यपस्य सम्यक्संबुद्धस्याविकोपितोऽस्थिसंघातस्तिष्ठति। अथायुष्मानानन्दो लघु लघ्वेव चतुर्गुणमुत्तरासङ्गं प्रज्ञप्य भगवन्तमिदमवोचत्। निषीदतु भगवान् प्रज्ञप्त एवासने। एवमयं पृथिवीप्रदेशो द्वाभ्यां सम्यक्संबुद्धाभ्यां परिभुक्तो भविष्यति यच्च काश्यपेन सम्यक्संबुद्धेन यच्चैतर्हि भगवतेति। निषण्णो भगवान् प्रज्ञप्त एवा-

1 Cf. *Divyā.*, p 76.

2 Cf. *Divyā.*, p. 76n.: भवत्क्षयकरः क्षण एष ब्राह्मणः। Tib. 309b. 1. 3: བྲམ་ཟེ་ འདིས་ཉེས་དེ།

सने। निषद्य भगवान्भिक्षूनामन्त्रयते स्म। इच्छथ यूयं भिक्षवः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातमविकोपितं द्रष्टुम्। एतस्य भगवन् काल एतस्य सुगत समयो यद्भगवान् भिक्षूणां काश्यपस्य सम्यक्संबुद्धस्याविकोपितं शरीरसंघातमुपदर्शयेत्। दृष्ट्वा भिक्षवश्चित्तमभिप्रसादयिष्यन्ति। भगवता लौकिकं चित्तमुत्पादितमिति। पश्यन्ति भगवतः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघातमविकोपितं द्रष्टुकामाः[1]। ततस्तेन काश्यपस्य सम्यक्संबुद्धस्याविकोपितः शरीरसंघात उच्छ्रापितः। तत्र भगवान् भिक्षूनामन्त्रयते स्म। उद्गृह्णीत भिक्षवो निमित्तम्। अन्तर्धास्यतीत्यन्तर्हितम्।

राज्ञा प्रसेनजिता श्रुतम्। भगवता श्रावकाणां दर्शनायाविकोपितः काश्यपस्य सम्य[क्संबुद्धस्य] शरीरसंघात उच्छ्रापित इति। श्रुत्वा च पुनः कुतूहलजातः सार्धमन्तःपुरकुमारैरमात्यैर्भटबलाग्रेण नैगमजानपदैश्च संप्रस्थितः। एवं विरूढकोऽनाथपिण्डदो गृहपतिः उषिदत्तः पुराणस्थपतिर्विशाखा मृगारमाता अनेकानि प्राणिशतसहस्राणि कुतूहलजातानि संप्रस्थितानि कैश्चित्पूर्वकैः कुशलमूलैः संचोद्यमानानि। यावदसावन्तर्हितः। तैः श्रुतमन्तर्हितोऽसौ भगवतः काश्यपस्य सम्यक्संबुद्धस्य शरीरसंघात इति। श्रुत्वा च पुनस्तेषां दुःखदौर्मनस्यमुत्पन्नं वृथास्माकमागमनमिति।

अन्यतमेन चोपासकेन स प्रदेशः प्रदक्षिणीकृतः। एवं च चेतसा चित्तमभिसंस्कृतम्। अस्मान्मे पदाविहारात्कियत्पुण्यं

1 Tib. 310a, l. 5-7 enlarges this portion by adding the passage धर्मता खलु etc. (See *Divyā.*, p. 63. l. 11).

भविष्यतीति। अथ भगवांस्तस्य महाजनकायस्याविप्रतिसार-संजननार्थं तस्य चोपासकस्य चेतसा चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णनिष्का जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तः पदाविहारं प्रकरोति विद्वान्[1] ॥ इति।

अन्यतमेनाप्युपासकेन तस्मिन्प्रदेशे मृत्तिकापिण्डो दत्तः। एवं चित्तमभिसंस्कृतम्। पदाविहारस्य तावदियत्पुण्यमाख्यातं भगवता। अस्य तु[2] मृत्तिकापिण्डस्य कियत्पुण्यं भविष्यतीति। अथ भगवांस्तस्य चेतसा चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णपिण्डा जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्त आरोपयेन्मृत्तिकापिण्डमेकम् ॥ इति।

तच्छ्रुत्वानेकैः प्राणिशतसहस्रैर्मृत्तिकापिण्डसमारोपणं कृतम्। अपरैस्तत्र मुक्तपुष्पाण्यभिक्षिप्तानि। एवं च चित्तमभिसंस्कृतम्। पदाविहारस्य च मृत्तिकापिण्डस्य च इयत्पुण्यम् [उक्तं] भगवता। अस्माकं तु मुक्तपुष्पाणां कियत्पुण्यं भविष्यतीति। अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णपेटा[3] जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्त आरोपयेन्मुक्तपुष्पस्य राशिम् ॥ इति।

अपरैस्तत्र मालाविहारः कृतः। चित्तं चाभिसंस्कृतम्। मुक्तपुष्पाणां भगवता इयत्पुण्य[मुक्तम्।] अस्माकं मालाविहारस्य

1 Cf. *Divyā.*, p. 78. 2 Cf. *Divyā.*, p. 78: अन्यत्र for अस्य तु

3 Tib. 312a, l. 2: གསེར་གྱི་སྒྲོམ།

कियत्पुण्यं भविष्यतीति। अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णवाहा जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तो मालाविहारं प्रकरोति विद्वान् ॥ इति।

अपरैस्तत्र दीपमाला दत्ता। चित्तं चाभिसंस्कृतम्। मालाविहारस्य भगवता इयत्पुण्यमुक्तम्। अस्माकं दीपदानस्य कियत् पुण्यं भविष्यतीति। अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णवाहा जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तः प्रदीपदानं प्रकरोति विद्वान् ॥ इति।

अपरैस्तत्र गन्धाभिषेको दत्तः। चित्तं चाभिसंस्कृतम्। प्रदीपदानस्य भगवता इयत्पुण्यमुक्तम्। अस्माकं गन्धाभिषेकस्य कियत्पुण्यं भविष्यतीति। अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णराशयो जाम्बूनदा नास्य समा भवन्ति।
यो बुद्धचैत्येषु प्रसन्नचित्तो गन्धाभिषेकं प्रकरोति विद्वान् ॥ इति।

अपरैस्तत्र च्छत्रध्वजपताकारोपणं कृतम्। चित्तं चाभिसंस्कृतम्। पदाविहारस्य मृत्पिण्डदानस्य मुक्तपुष्पाणां मालाविहारस्य प्रदीपदानस्य गन्धाभिषेकस्य चेयत्पुण्यमुक्तं भगवता। अस्माकं छत्रध्वजपताकारोपणे कियत्पुण्यं भविष्यतीति। अथ भगवांस्तेषा[मपि चेतसा] चित्तमाज्ञाय गाथां भाषते।

शतं सहस्राणि सुवर्णपर्वता मेरोः समा नास्य समा भवन्ति ।
यो बुद्धचैत्येषु प्रसन्नचित्त आरोपयेच्छत्रध्वजापताकाः ॥

एषा हि दक्षिणा प्रोक्ता अप्रमेये तथागते ।
समुद्रकल्पे संबोधौ सार्थवाहे अनुत्तरे ॥ इति ।

तेषामेतदभवत् । परिनिर्वृतस्य तावद्भगवतः कारणमियत् पुण्य[मुक्तं] भगवता । तिष्ठतः कियत्पुण्यं भविष्यतीति । अथ भगवांस्तेषामपि चेतसा चित्तमाज्ञाय गाथां भाषते ।

तिष्ठन्तं पूजयेद्यश्च यश्चापि परिनिर्वृतम् ।
समं चित्तं प्रसाद्येह नास्ति पुण्यविशेषता ॥

एवं ह्यचिन्तिया बुद्धा बुद्धधर्मोऽप्यचिन्तियः ।
अचिन्तिये प्रसन्नानां विपाकोऽपि अचिन्तियः ॥

तेषामचिन्तियानामप्रतिहतधर्मचक्रवर्तिनाम् ।
सम्यक्संबुद्धानां नालं गुणपारमधिगन्तुम् ॥ इति ।

ततो भगवता तस्य महाजनकायस्य तथाविधा धर्मदेशना कृता यां श्रुत्वा अनेकैः प्राणिशतसहस्रैर्महान् विशेषोऽधिगतः । कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि कैश्चित्प्रत्येकायां बोधौ कैश्चिदनुत्तरायां सम्यक्संबोधौ । कैश्चिदुष्मगतानि प्रतिलब्धानि कैश्चिन्मूर्धानः कैश्चित्सत्यानुलोम कैश्चित्क्षान्तयः । कैश्चित्स्रोतापत्तिफलं साक्षात्कृतं कैश्चित्सकृदागामिफलं कैश्चिदनागामिफलम् । कैश्चित्प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । यद्भूयसा सा पर्षद् बुद्धनिम्ना धर्मप्रवणा संघप्राग्भारा व्यव-

स्थापिता। तत्र श्राद्धैर्ब्राह्मणगृहपतिभिस्तस्मिन् प्रदेशे महः स्थापितः। तोयिकामहस्तोयिकामह इति संज्ञा संवृत्ता[1]।

अथ भगवान् कोसलेषु जनपदे[षु] चारिकां चरन् श्रावस्तीमनुप्राप्तः। श्रावस्त्यां विहरति जेतवने अनाथपिण्डदस्यारामे। अश्रौषीदनाथपिण्डदो गृहपतिः भगवान् कोसलेषु जनपदेषु चारिकां चरन् श्रावस्तीमनुप्राप्तः श्रावस्त्यां विहरति जेतवने अस्माकमेवारामे इति। श्रुत्वा च पुनर्येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णमनाथपिण्डदं गृहपतिं भगवान्धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति पूर्ववद्यावत्संप्रहर्ष्य तूष्णीम्। अथानाथपिण्डदो गृहपतिरुत्थायासनात्पूर्ववद्येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन इति। पूर्ववत् शुचि प्रणीतं खादनीयभोजनीयं समुपानीय काल्यमेवोत्थायासनकानि प्रज्ञप्योदकमणीन्प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति। समयो भदन्त सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यते इति। दौवारिकपुरुषमामंत्रयते। न तावद्भोः पुरुषान्यतीर्थ्यकानां प्रवेशो देयो यावद् बुद्धप्रमुखेन भिक्षुसंघेन न भुक्तम्। ततः पश्चात्तीर्थ्यकेभ्यो दास्यामीति। एवमार्य इति दौवारिकः [पुरुषः अनाथपिण्ड]दस्य गृहपतेः प्रत्यश्रौषीत्। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षु-

1 *Divyā.* (p. 80) ends here इन्द्रनामब्राह्मणावदानम् and commences नगरावलम्बिकावदानम्। See above p. 73n.

गणपरिवृतो भिक्षुसंघपुरस्कृतः पूर्ववद्यावद्धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय।

अथायुष्मान् महाकाश्यपोऽन्यतमस्मादारण्यकाच्छयनासनाद्दीर्घकेशश्मश्रुलूहचीवरो जेतवनं गतः। स पश्यति जेतवनं शून्यम्। तेनोपधिवारिकः पृष्टः। कुत्र बुद्धप्रमुखो भिक्षुसंघ इति। तेन समाख्यातम्। अनाथपिण्डदेन गृहपतिनोपनिमंत्रित इति। स संलक्षयति। तत्रैव पिण्डपातं परिभोक्ष्यामि बुद्धप्रमुखं भिक्षुसंघं च पर्युपासिष्ये इति। सः अनाथपिण्डदस्य गृहपतेर्निवेशनं गतः। दौवारिकेणोक्तः। आर्य मा प्रवेक्ष्यसि। कस्यार्थाय। अनाथपिण्डदेन गृहपतिना आज्ञा दत्ता। मा तावत्तीर्थ्यानां प्रवेशं दास्यसि यावद् बुद्धप्रमुखेन भिक्षुसंघेन परिभुक्तम्। ततः पश्चात्तीर्थ्यानां दास्यामीति। आयुष्मान् महाकाश्यपः संलक्षयति तस्य मे लाभाः सुलब्धा ये मां ब्राह्मणगृहपतयः श्रमणशाक्यपुत्रीय इति न जानते। गच्छामि कृपणजनस्यानुकम्पां करोमीति विदित्वा उद्यानं गतः। स संलक्षयति। अद्य मया कस्यानुग्रहः कर्तव्यः। यावदन्यतरा नगरावलम्बिका कुष्ठाभिभूता सरुजार्ता पक्वगात्रा भिक्षामटति। स तस्याः सकाशमुपसंक्रान्तः। तस्याश्च भिक्षायामाचामः संपन्नः[1]। तया आयुष्मान् महाकाश्यपो दृष्टः कायप्रासादिकश्चित्तप्रासादिकश्च शान्तेनेर्यापथेन। सा संलक्षयति। नूनं मयैवंविधे दक्षिणीये कारा न कृता येन मे इयं समवस्था। यद्यार्यो महाकाश्यपो ममान्तिकादनु-

1 Tib. 315. l. 6.

कम्पा[मुपा]दायाचामं प्रतिगृह्णीयादहमस्मै दद्यामिति। तत आयुष्मता महाकाश्यपेन तस्याश्चेतसा चित्तमाज्ञाय पात्रमुपनामितम्। यदि ते भगिनि परित्यक्तं तद्दीयतामस्मिन्पात्रे इति। ततस्तया चित्तमभिप्रसाद्य तस्मिन्पात्रे [दत्तं] मक्षिका [च] पतिता। सा तामपनेतुमारब्धा। तस्यास्तस्मिन्नाचामे अंगुलिः पतिता। सा संलक्षयति। किं चाप्यार्येण मम चित्तानुरक्षणया न च्छोरितम्। अपि तु न परिभोक्ष्यतीति। आयुष्मता महाकाश्यपेन तस्याश्चेतसा चित्तमाज्ञाय तस्या एव समक्षमन्यतमं कुडयमूलं निश्रित्य परिभुक्तम्। सा संलक्षयति। किं चाप्यार्येण मम चित्तानुरक्षणया परिभुक्तं नानेनाहारेणाहारकृत्यं करिष्यतीति। अथायुष्मान् महाकाश्यपस्तस्याश्चेतसा चित्तमाज्ञाय तां नगरावलम्बिकामिदमवोचत्। भगिनि प्रामोद्यमुत्पादयास्यहं त्वदीयेनाहारेण रात्रिंदिवसमतिनामयिष्यामीति। तस्या अतीवौद्बिल्यमुत्पन्नम्। ममार्येण महाकाश्यपेन पिण्डपातः प्रतिपादितः प्रगृहीत इति आयुष्मति महाकाश्यपे चित्तमभिप्रसाद्य कालगता। तुषिते देवनिकाये उपपन्ना। सा शक्रेण देवेन्द्रेण दृष्टा आचामं प्रतिपादयन्ती कालं च कुर्वाणा नो तु दृष्टा कुत्रोपपन्ना इति। [स] नरकान् व्यवलोकयितुमारब्धो न पश्यति तिरश्चः प्रेतान्मनुष्यांश्च चातुर्महाराजिकान् देवान् त्रयस्त्रिंशान्न पश्यति। तथा ह्यधस्ताद्देवानां ज्ञानदर्शनं प्रवर्तते नोपरिष्टात्[1]। अथ शक्रो देवानामिन्द्रो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तं गाथाभिगीतेन प्रश्नं पप्रच्छ।

1 Tib. 316a, l. 4 marks here འདུལ་བ་གཞི་བམ་པོ་བཞི་བཅུ་པ །

चरतः पिण्डपातं हि काश्यपस्य महात्मनः ।
कुत्रासौ मोदते नारी काश्यपस्याचामदायिका ॥

भगवानाह ।

तुषिता नाम ते देवाः सर्वकामसमृद्धयः ।
तत्रासौ मोदते नारी काश्यपस्याचामदायिका ॥ इति ।

अथ शक्रस्य देवेन्द्रस्यैतदभवत् । इमे तावन्मनुष्याः पुण्यानामप्रत्यक्षदर्शिनो दानानि ददति पुण्यानि कुर्वन्ति अहं प्रत्यक्षदर्श्येव पुण्यानां स्वे पुण्यफले व्यवस्थितः । तस्माद्दानानि वा ददामि पुण्यानि वा करोमि । अयमार्यो महाकाश्यपो दीनानाथकृपणवनीपकानुकम्पी । यत्त्वहमेनं पिण्डकेन प्रतिपादयेयमिति विदित्वा कृपणवीथ्यां गृहं निर्मितवान् । चीरचीरचीवरकं[1] काकाभिनिलीनकं नातिपरमरूपं कुविन्दं चात्मानमभिनिर्माय उद्धूतशिरस्कः[2] शणशाटीनिवासितः स्फुटितपाणिपादो वस्त्रं वयितुमारब्धः । शच्यपि देवकन्या कुविन्दभाववेषधारिणी तसरिकां कर्तुमारब्धा । पार्श्वे चास्य दिव्या सुधा सज्जीकृता तिष्ठति । अथायुष्मान् महाकाश्यपः कृपणानाथवनीपकजनानुकंपकोऽनुपूर्वेण तद्गृहमनुप्राप्तः । दुःखितकोऽयमिति कृत्वा द्वारे स्थितेन पात्रं प्रसारितम् । शक्रेण देवेन्द्रेण

1 Tib. 316b. 1. 3: བཀྲེར་པའི་སྣད་དུ་ཤག་ཤིག་ཙ་ འདུག་པར་ལྷང་ལྷོང་རྩོལ་པ ।

2 *Divyā.*, p. 83: अवचीरविचीरकं काकाभिलीनकं नातिपरमरूपं कुविन्दं चात्मानमभिनिर्मायोद्धूतशिरस्कः ।

दिव्यायाः सुधायाः पात्रं पूरितम्। अथायुष्मतो महाकाश्यपस्यै-तदभवत्।

दिव्यं चास्य सुधाभक्तमयं च गृहविस्तरः।
सुविरुद्धमिति ज्ञात्वा जातो [मे] हृदि संशयः॥ इति।

धर्मता ह्येषा। असमन्वाहृत्यार्हतां ज्ञानदर्शनं न प्रवर्तते। स समन्वाहर्तुं[1] प्रवृत्तो यावत् पश्यति शक्रं देवेन्द्रम्। स कथयति। कौशिक किं दुःखितजनस्यान्तरायं करोषि। यस्य भगवता दीर्घरात्रानुगतो विचिकित्साकथंकथाशल्यः स-[मू]ल आवृढो[2] यथापि तत्तथागतेनार्हता सम्यक्संबुद्धेन। आर्य महाकाश्यप किं दुःखितजनस्या[न्तरायं] करोमि[3]। इमे तावन्मनुष्या अप्रत्यक्षदर्शिनः पुण्यानां दानानि ददति पुण्यानि कुर्वन्ति। अहं प्रत्यक्षदर्श्येव पुण्यानां कथं दानानि [न] ददामि पुण्यानि वा न करोमि। ननु चोक्तं भगवता।

करणीयानि पुण्यानि दुःखं ह्यकृतपुण्यतः।
कृतपुण्या हि मोदन्ते अस्मिंल्लोके परत्र च॥ इति।

ततः प्रभृति आयुष्मान् महाकाश्यपः समन्वाहृत्य कुलानि पिण्डपातं प्रवेष्टुमारब्धः। अथ शक्रो देवेन्द्र आकाशस्थ एवायुष्मतो महाकाश्यपस्य दिव्यायाः सुधायाः पात्रं पूरयति। आयुष्मानपि महाकाश्यपः पात्रमवाङ्मुखं करोत्यन्नं पानं

1 *Divyā.*, p. 83: अवचीरविचीरकं काकाभिलीनकं नातिपरमरूपं कुविन्दं चात्मान-मभिनिर्मायोद्गूढशिरस्कः।

2 Cf. Pāli :abbūḷha.

3 Ms. दुःखितजनस्याहं करोमि।

छोर्यते। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि पिण्डोपधानं धारयितव्यमिति।

सामन्तकेन शब्दो विसृतः। अमुकया नगरावलम्बिकया आर्यो महाकाश्यपः आचामेन प्रतिपादितः। सा च तुषिते देवनिकाये उपपन्ना। इति राज्ञा प्रसेनजिता कोसलेन श्रुतम्। श्रुत्वा च पुनर्येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। स एकान्तनिषण्णं राजानं प्रसेनजितं कोसलं भगवान्धर्म्यया कथया संदर्शयति। पूर्ववद्यावत् संप्रहर्ष्य तूष्णीम्[1]।

अथ राजा प्रसेनजित् कोसलः उत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवानार्यो महाकाश्यपमुद्दिश्य भक्तं सप्ताहेनेति। अधिवासयति भगवान्राज्ञः प्रसेनजितः कोसलस्य तूष्णींभावेन। अथ राजा प्रसेनजित्कोसलो भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः। अथ राजा प्रसेनजित्कोसलस्तामेव रात्रिं शुचि प्रणीतं खादनीयभोजनीयं समुपानीय काल्यमेवोत्थायासनकानि प्रज्ञप्योदकर्मणीन् प्रतिष्ठाप्य भगवतो दूतेन कालमारोचयति। पूर्ववद्यावत् स्वहस्तं सन्तर्पयति संप्रवारयति। अन्यतमश्च कोट्टमल्लको[2] वृद्धान्ते चित्तमभिप्रसादयंस्तिष्ठति। अयं राजा प्रत्यक्षदर्श्येव पुण्यानां स्वे पुण्यफले प्रतिष्ठितोऽतृप्त एव पुण्यैर्दानानि ददाति पुण्यानि करोति।

1 Cf. *Divyā.*, p. 85.

2 *Divyā.*, p 85; कोड

अथ राजा प्रसेनजित्कोसलोऽनेकपर्यायेण बुद्धप्रमुखं भिक्षुसंघं शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं सन्तर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। ततो भगवताभिहितः। राजन् कस्य नाम्ना दक्षिणामादिशामि। किं तवाहोस्विद्येन तवान्तिकात्प्रभूततरं पुण्यं प्रसूतमिति। राजा संलक्षयति। मम भगवान् पिण्डपातं परिभुंक्ते। कोऽन्यो ममान्तिकात्प्रभूततरं पुण्यं प्रसविष्यतीति विदित्वा कथयति। भगवन् येन ममान्तिकात् प्रभूततरं पुण्यं प्रसूतं तस्य भगवान् नाम्ना दक्षिणामादिशत्विति। ततो भगवता कोट्टमल्लकस्य नाम्ना दक्षिणा आदिष्टा। एवं यावत् षड्दिवसान्। षष्ठे दिवसे राजा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। मम भगवान् पिण्डपातं परिभुंक्ते। कोट्टमल्लस्य[1] नाम्ना दक्षिणामादिशतीति। सोऽमात्यैर्दृष्टः। ते कथयन्ति। किमर्थं देव करे कपोलं दत्त्वा चिन्तापरो व्यवस्थित इति। राजा कथयति। भवन्तः कथं न चिन्तापरस्तिष्ठामि। यत्रेदानीं भगवान् मम पिण्डपातं परिभुंक्ते कोट्टमल्लस्य नाम्ना दक्षिणामादिशतीति। तत्रैको वृद्धामात्यः कथयति। अल्पोत्सुको देव भवतु। वयं तथा करिष्यामो यथा श्वो भगवान्देवस्यैव नाम्ना दक्षिणामादिशतीति। तेन पौरुषेयाणामाज्ञा दत्ता। श्वो भवद्भिः प्रणीततर आहारः कर्तव्यः प्रभूतश्च। एवं चारयितव्यः। उपार्धो भिक्षूणां पात्रे पतत्यर्धो भूमाविति। अमात्यैरपरस्मिन्दिवसे प्रभूतः आहारः सज्जितः प्रणीतश्च। ततः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं परिवेषितुमारब्धाः।

उपार्धं भिक्षूणां पात्रे पातयन्त्युपार्धं भूमौ। ततः कोट्टमल्लकाः प्रधाविता भूमौ निपतितं गृह्णीम इति। ते परिवेषकैर्निवारिताः। ततः स कोट्टमल्लकः कथयति। यद्यस्य राज्ञः प्रभूतं संपत्स्वापतेयमस्ति। सन्त्यन्येऽप्यस्मद्विधा दुःखितका ये आकांक्षन्ते। तेषां किमर्थं न दीयते। किमनेनापरिभोगं छोरितेनेति। तस्य कोट्टमल्लकस्य चित्तविक्षेपो जातः। न शक्तं तेन तथा चित्तं प्रसादयितुं यथा पूर्वम्। ततो राजा बुद्धप्रमुखं भिक्षुसंघं भोजयित्वा न मम भगवान् नाम्ना दक्षिणामादिशतीति विदित्वा दक्षिणामश्रुत्वैव प्रदिष्टः। ततो भगवता राज्ञः प्रसेनजितः कोसलस्य नाम्ना एवं दक्षिणादिष्टा।

हस्त्यश्वरथपत्तियायिनो भुंजानस्य पुरं सनैगमं पश्यसि।
बलं हि रूक्षिकाया अलवणिकायाः कुल्मासपिण्डिकायाः॥ इति[1]

अथायुष्मानानन्दो भगवन्तमिदमवोचत्। बहुशो भदन्त भगवता राज्ञः प्रसेनजितः कोसलस्य निवेशने भुक्त्वा नाम्ना दक्षिणा आदिष्टा। नाभिजानामि कदाचिदेवंविधां दक्षिणामादिष्टपूर्वाम्। भगवानाह। इच्छसि त्वमानन्द राज्ञः प्रसेनजित्कोसलस्यालवणिकां कुल्मासपिण्डिकामारभ्य कर्मप्लोतिं श्रोतुम्। एतस्य भगवन् कालः एतस्य सुगत समयो यद्भगवान् राज्ञः प्रसेनजितः कोसलस्यालवणिकां कुल्मासपिण्डिकामारभ्य कर्मप्लोतिं वर्णयेत्। भगवतः श्रुत्वा भिक्षवो धारयिष्यन्तीति। तत्र भगवान् भिक्षूनामन्त्रयते स्म।

1 See Tib. 320a. l. 1-2.

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटके गृहपतिः प्रतिवसति। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। पूर्ववद्यावदुन्नीतो वर्धितो महान्संवृत्तः। यावदसौ गृहपतिः पत्नीमामन्त्रयते। भद्रे जातोऽस्माकमृणहरो धनहरश्चेति। गच्छामि पण्यमादाय देशान्तरमिति। सा कथयत्यार्य एवं कुरुष्वेति। स पण्यमादाय देशान्तरं गतः। तत्रैव चानयेन व्यसनमापन्नोऽल्पपरिच्छेदः सः। तस्य गृहे धनजातं परिक्षीणम्। सोऽस्य पुत्रो दुःखितो जातः। तस्य गृहपतेर्वयस्यकः। स तेनोक्तः। ममापि त्वं पुत्रः। मम क्षेत्रं प्रतिपालय। अहं तव भक्तेन योगोद्वहनं करोमीति। स तस्य क्षेत्रव्यापारं कर्त्तुमारब्धः। सोऽप्यस्य भक्तेन योगोद्वहनं करोति। यावदपरेण समयेन पर्व प्रत्युपस्थितम्। तस्य दारकस्य माता संलक्षयति। अद्य गृहपतिपत्नी सुहृत्संबन्धिबान्धवश्रमणभोजने व्यग्रा भविष्यति। गच्छामि सानुकालं तस्य दारकस्य भक्तं नयामीति। सा सानुकालं गत्वा गृहपतिपत्न्या एतमर्थं निवेदयति। सा रुषिता कथयति। न तावच्छ्रमणब्राह्मणेभ्यो ददामि। ज्ञातीनां वा तावत्प्रेष्यस्य ददामि। अद्य तावत्तिष्ठतु। श्वो द्विगुणं दास्यामीति। ततस्तस्य दारकस्य माता संलक्षयति। मा दारको बुभुक्षितो भविष्यति। एतामात्मीयामलवणिकां कुल्मासपिण्डिकां नयामीति। सा तामादाय क्षेत्रं गता। पुत्रस्य विस्तरेण यद् गृहपत्न्याभिहितं तत्सर्वमाख्याय कथयति। इयं मया आत्मीया अलवणिका कुल्मासपिण्डिका आनीता।

एतां परिभुंक्ष्वेति। स कथयति। स्थापयित्वा गच्छेति। सा स्थापित्वा प्रक्रान्ता। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोके उत्पद्यन्ते हीनदीनानुकंपकाः प्रान्तशयनासनभक्ता एक-दक्षिणीया लोकस्य। यावदन्यतमः प्रत्येकबुद्धस्तं प्रदेशमनुप्राप्तः। स तेन दृष्टः। कायप्रासादिकश्चित्तप्रासादिकश्च शान्तेर्यापथवर्ती। स संलक्षयति। नूनं मयैवंविधे सद्भूतदक्षिणीये कारा न कृता। येन मे ईदृशी समवस्था। यद्ययं ममान्तिकादलवणिकां कुल्मास-पिण्डिकां गृह्णीयादहमस्मै दद्यामिति। ततः प्रत्येकबुद्धस्तस्य दरिद्रपुरुषस्य चेतसा चित्तमाज्ञाय पात्रं प्रसारितवान्। सचेत्तव परित्यक्तं दीयतामस्मिन्पात्रे इति। ततस्तीव्रेण प्रसादेन सा अलवणिका कुल्मासपिण्डिका प्रत्येकबुद्धाय प्रतिपादिता।

किं मन्यध्वे भिक्षवो योऽसौ दरिद्रपुरुषः एष एवासौ राजा प्रसेनजित्कोसलस्तेन कालेन तेन समयेन। यदनेन प्रत्येकबुद्धा-यालवणिका कुल्मासपिण्डिका प्रतिपादिता। तेन कर्मणा षट्कृत्वो देवेषु त्रयस्त्रिंशेषु राजैश्वर्याधिपत्यं कारितवान्। षट्कृत्वोऽस्यामेव श्रावस्त्यां राजा क्षत्रियो मूर्धाभिषिक्तस्तेनैव कर्मावशेषेण। एत-र्ह्यपि राजा क्षत्रियो मूर्धाभिषिक्तः संवृत्तः। सोऽस्य पिंडको विपक्वः। विपाकं तमहं सन्धाय कथयामि।

हस्त्यश्वरथपत्तियायिनो भुञ्जानस्य पुरं सनैगमं पश्यसि।
बलं हि रूक्षिकाया अलवणिकायाः कुल्मासपिण्डिकायाः॥ इति।

सामन्तकेन शब्दो विसृतः। भगवता राज्ञः प्रसेनजितः कोसलस्यालवणिका कुल्मासपिण्डिकामारभ्य कर्मप्लोतिर्व्याकृतेति

राज्ञा प्रसेनजित्कोसलेन श्रुतम्। स येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णं राजानं प्रसेनजितं कोसलं भगवान् धर्म्यया कथया पूर्ववद्यावत्संप्रहर्ष्य तूष्णीम्। अथ राजा प्रसेनजित्कोसल उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा भगवन्तमिदमवोचत्। अधिवासयतु मे भगवांस्त्रैमासीं चीवरपिंडपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान्राज्ञः प्रसेनजित्कोसलस्य तूष्णींभावेन। ततो राज्ञा प्रसेनजिता कोसलेन बुद्धप्रमुखाय भिक्षुसंघाय त्रैमासीं शतरसं भोजनं दत्तम्। एकैकश्च भिक्षुः शतसाहस्रकेण वस्त्रेणाच्छादितः। तैलस्य च कुम्भकोटिं समुपानीय दीपमालामभ्युद्यतो दातुम्। तत्र भक्ते पूजायां च महाकोलाहलो जातः[1]। यावदन्यतमा नगरावलम्बिका अतीव दुःखिता। तया खण्डमल्लकेन[2] भिक्षामटन्त्या स उच्चशब्दो महाशब्दः श्रुतः[3]। श्रुत्वा च पुनः पृच्छति। भवन्तः किमेष उच्चशब्दो महाशब्द इति। अपरैः समाख्यातम्। राज्ञा प्रसेनजिता कोसलेन बुद्धप्रमुखो भिक्षुसंघस्त्रैमासीं भोजितः। एकैकश्च भिक्षुः शतसहस्रमूल्येन वस्त्रेणाच्छादितः। तैलकुम्भकोटिं च समुपानीय दीपमालामभ्युद्यतो दातुमिति।

ततस्तस्या नगरावलम्बिकाया एतदभवत्। अयं राजा प्रसेनजित्कोसलः पुण्यैरतृप्तः अद्यत्वेन दानानि ददाति पुण्यानि

1 Cf. *Divyā.*, p. 89. 2 Tib. 322b. 1. 6: ཟུའི་ཚག་དུམ |
3 Cf. *Divyā.*, p. 89

करोति। यत्त्वहमपि कुतश्चित्समुपानीय भगवतः प्रदीपं दद्यामिति तया खंडमल्लकेन तैलस्य स्तोकं याचित्वा प्रदीपः प्रज्वाल्य भगवतश्चंक्रमे दत्तः। पादयोश्च निपत्य प्रणिधानं कृतम्। अनेनाहं कुशलमूलेन यथायं भगवान् शाक्यमुनिर्वर्षशतायुषि प्रजायां शास्ता लोके उत्पन्नः एवमहमपि वर्षशतायुषि शाक्यमुनिरेव शास्ता भवेयम्। यथा चास्य शारिपुत्रमौद्गल्यायनावग्रयुगं भद्रयुगमानन्दो भिक्षुरुपस्थायिकः शुद्धोदनः पिता महामाया माता कपिलवस्तु नगरं राहुलभद्रः कुमारः एवं ममापि शारिपुत्रमौद्गल्यायनावग्रयुगं भद्रयुगं स्यादानन्दो भिक्षुरुपस्थायिकः शुद्धोदनः पिता माता महामाया कपिलवस्तु नगरं राहुलभद्रः कुमारः पुत्रः। यथा चायं भगवान्धातुविभागं कृत्वा परिनिर्वास्यति एवमहमपि धातुविभागं कृत्वा परिनिर्वापयेयमिति[1]।

यावत्सर्वे ते दीपाः परिनिर्वाणाः स तया प्रज्वालितो दीपो ज्वलत्येव। धर्मता खलु बुद्धानां भगवतां न तावदुपस्था[पकः प्रतिसंलीयति] यावन्न बुद्धा भगवन्तः प्रतिसंलीना इति। आयुष्मानानन्दः संलक्षयति। अस्थानमनवकाशो यद्बुद्धा भगवन्तः आलोकशय्यां कल्पयिष्यन्ति यत्त्वहं प्रदीपं निर्वापयेयमिति। स हस्तेन निर्वापयितुमारब्धो न शक्नोति तत[श्चीवरकर्णिकेन] ततो व्यजनेन तथापि न शक्नोतीति। भगवानाह। मा खेदमानन्दापत्स्यसे। यदि वैरंभा अपि वायवो वायेयुस्तेऽपि न शक्नुयुर्निर्वापयितुं प्रागेव हस्तचीवरकर्णिको व्यजनं वा। तथा-

1 See Tib. 323b, l. 3.

ह्ययं प्रदीपस्तया दारिकया महता चित्ताभिसंस्कारेण प्रज्वालितः। अपित्वानन्द भविष्यत्यसौ दारिका वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतोऽर्हत्सम्यक्संबुद्धः। शारिपुत्रमौद्गल्यायनौ तस्याग्रयुगं भद्रयुगमानन्दो भिक्षुरुपस्थायिकः शुद्धोदनः पिता माता महामाया कपिलवस्तु नगरं राहुलभद्रः कुमारः पुत्रः। सापि धातुविभागं कृत्वा परिनिर्वास्यतीति[1]।

सामन्तकेन शब्दो विसृतः। अमुकया नगरावलम्बिकया भगवतश्चंक्रमे शिरसा प्रदीपो दत्तः। सा भगवतानुत्तरायां सम्यक्संबोधौ व्याकृता। इति श्रुत्वा श्राद्धैर्ब्राह्मणगृहपतिभिरमावनागतगुणापेक्षया सर्वोपकरणैः प्रवारिता।

तथा राज्ञा प्रसेनजिता कोसलेन श्रुतम्। ततो विस्मयजातस्तैलकुम्भसहस्रमादाय चित्रां प्रदीपमालां कृतवान्। चतूरत्नमयं च प्रदीपं चंक्रमशिरसि प्रतिष्ठितवान्। ततो भगवतः सकाशं गत्वा भगवन्तमिदमवोचत। मया च भदन्त भगवानार्यमहाकाश्यपस्य पूजाधिकारेण भक्तसप्ताहेनोपनिमंत्रितः। तस्य मम भगवता अलवणिकां कुल्मासपिंडिकामारभ्य पूर्विका कर्मप्लोतिर्व्याकृता। पुनश्च मया भगवांस्त्रैमासीं सश्रावकसंघो भोजितः। एकैकश्च भिक्षुः शतसहस्रेण मूल्येन वस्त्रयुगेनाच्छादितस्तैलकुम्भकोटिं च समुपानीय प्रदीपमाला दत्ता। न चाहं भगवतानुत्तरायां सम्यक्संबोधौ व्याकृतः। साधु भगवान् ममाप्यनुत्तरायां सम्यक्संबोधौ व्याकुर्यात्। कदाचिदहं लोकज्येष्ठः स्यां विनायक इति। भग-

1 Here ends नगरावलम्बिकावदानम्। See *Divyā*, p. 91.

वानाह्। गम्भीरा महाराज अनुत्तरा सम्यक्संबोधिः। गम्भीरावभासा दुर्दृशा दुरवबोधा अतर्क्या अतर्क्यावचरा सूक्ष्मा निपुणा पंडितविज्ञवेदनीया[1]। सा न सुकरा त्वयैकेन दानेन समुपानेतुं न दानशतेन न दानसहस्रेण न दानशतसहस्रेणापि तु महाराज त्वया अनुत्तरां सम्यक्संबोधिमभिप्रार्थयिता[2] दातव्यान्येव दानानि कर्तव्यान्येव पुण्यानि सेवितव्यानि कल्याणमित्राणि भजितव्यानि पर्युपासितव्यानि। एवं त्वं भविष्यसि कदाचिल्लोकज्येष्ठो विनायक इति। एवमुक्तो राजा प्रसेनजित् कोसलः प्रारोदीदश्रूणि वर्षयन्। अथ राजा प्रसेनजित् कोसलश्चीवरकर्णकेनाश्रूण्युन्मृज्य भगवन्तमिदमवोचत्। अनुत्तरां भदन्त भगवता सम्यक्संबोधिं प्रार्थयिता[2] कियन्ति दानानि दत्तानि पुण्यानि वा कृतानीति। भगवानाह। तिष्ठन्तु तावन्महाराज येऽतीताः कल्पाः। यन्मयास्मिन्नेव भद्रके कल्पे अनुत्तरां सम्यक्संबोधिं प्रार्थयिता[2] दानानि दत्तानि पुण्यानि चानेकप्रकाराणि कृतानि तच्छृणुत साधु च सुष्ठु च मनसिकुरुत भाषिष्ये[3]।

भूतपूर्वं महाराजामितायुषि प्रजायामुपोषधो नाम राजा बभूव। तस्य मूर्ध्नि पिटको जातः। मृदुः सुमृदुस्तद्यथा तूलपिचुर्वा कर्पास-

1. Cf. *Divyā.*, p. 492; *Majjhima Nikāya*, I. p. 167.

2 प्रार्थयिता is used for प्रार्थयता in several places.

3 Tib. 326-327a inserts here an *Antaroddāna*:

ང་ལས་ནུ་དང་ཞེགས་མཐོང་ཆེ། དུས་དཔོག་ཀུ་ཤ་གཏོལ་པ་དང་། 
ལྷ་ཆེན་པོ་ དང་ཟླ་ཕྲུར་རྒྱལ། མི་འོང་གཏོང་དང་ནོར་བཟངས་དང་། 
ཐམས་ཅད་སྐྱོ་ལ་དང་འདུས་བྱེད།།

पिचुर्वा परिपाकत्वात् स्फुटितः । कुमारो जातः । अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाटः उच्चघोषः संगतभ्रूस्तुङ्गनासो[1] द्वात्रिंशता महापुरुषलक्षणैः समलंकृतगात्रः । जातमात्रः कुमारोऽन्तःपुरं प्रवेशितः । उपोषधस्य राज्ञोऽशीतिः स्त्रीसहस्राणि कुमारं दृष्ट्वा प्रस्रुतानि[2] । एकैका स्त्री कथयति मान्धाय मान्धाय इति । तस्य मान्धाता मान्धातेति संज्ञा संवृत्ता । अन्ये कथयन्ति । मूर्ध्नो जातस्तस्माद्भवतु कुमारस्य मूर्धात इति नाम । तत्र केचिन्मान्धातेति जानते केचिन्मूर्धात इति ।

विस्तरेण मान्धातृसूत्रं मध्यमागमे राजसंयुक्तकनिपाते ।

मान्धातुः कुमारस्य कुमारक्रीडायां क्रीडतः षट्[3] शक्राश्च्युताः । एवं यौवराज्यं कारयतः षड् महाराज्यं कारयतः षड् जाम्बूद्वीपकान् जनपदान् समनुशासतः षट् । सहचित्तोत्पादाच्चास्य रत्नवर्षं पतितं वस्त्रवर्षम् । अन्तःपुरे हिरण्यवर्षम् ।

तेन खलु समयेन वैशाल्यां दुर्मुखो नाम ऋषिः पंचाभिज्ञः । तस्याश्रमपदे नित्यं पक्षिणोऽभिनिकूजन्ति । शब्दकंटकानि ध्यानानि । स चित्तैकाग्रतां नासादयति । इति तेन पक्षिणां शापो दत्तः । शीर्यन्तामेषां पक्षा इति । ततो राज्ञा मान्धात्रा

1 See *Divyā*, pp. 2.58.

2 In our ms. as also in the printed edition of *Divyā*., शक्रा has been misread as चक्रा The Tib. rendering of this word is བརྒྱ་བྱིན which lit. means शतक्रतु i. e. शक्र or इन्द्र । The word is शक्र and not चक्र is made clear in the *Divyā*., p.225.

श्रुतम्। श्रुत्वा निष्कारुणिकोऽयमृषिरिति कृत्वा उक्तः। न तेन मद्विषये वस्तव्यमिति। स संलक्षयति। अयं राजा चतुर्द्वीपेश्वरः क्व मया गन्तव्यमिति। स [सुमेरु]परिषण्डं गत्वावस्थितः[1]।

एवमवरगोदानीयं समनुशासतः षट् शक्राश्च्युताः[2]। पूर्वविदेहे षट्। उत्तरकुरौ षट्। निमिन्धरगिरौ स्थितस्य षट्। एवं विनतकेऽश्वकर्णे सुदर्शने खदिरके ईषाधारे युगन्धरे च[3]।

अन्तरोद्दानम।
निमिंधर इति विनतकः अश्वकर्णगिरिस्तथा।
सुदर्शनः खदिरकः ईषाधारो युगन्धरः॥

ततः सुमेरुमूर्धन्यभिरोहता तेन ऋषिणा भटबलाग्रं स्तम्भितम्[4]। दिवौकसो यक्षः पुरोजवो दृष्ट्वा गाथां भाषते।

नियच्छ ब्राह्मण क्रोधं नैतत्सर्वत्र सिध्यति।
मान्धाता नृपतिह्येवं नैते वैशालका वकाः[5]॥ इति।

राजा मान्धाता पृच्छति। केनैतद्भटबलाग्रं स्तम्भितम्। देवर्षिणा। राजा पृच्छति। किं तेषामृषीणां प्रियम्। देव जटाः। शीर्यन्तामेषां जटाः। मम च पुरोजवाः सन्तु। त[त]स्तेषां जटाः शीर्णाः। धनुर्बाणपाणयश्चाग्रतो धावितुमारब्धाः। स्त्रीरत्नेनाभि-

1 This text omits all the stories relating to Māndhātā's supernatural exploits, e. g. raining of grains, cotton, yarn, cloth, and gold. See *Divyā.*, pp. 212f. Tib. gives the stories in full and follows the *Divyā* literally.

2 Tib. 331a. l. 7 : བརྒྱ་བྱིན་དྲུག་ཤི་འཕོས་པ། Tib. corresponds to *Divyā.*, p. 214. l. 4.

3 For the full text see *Divyā.*, pp. 214-217.

4 *Divyā.*, p. 217. विष्कम्भितं

5 Cf. *Divyā.*, p. 217; Tib. 335a-336b. l. 1.

हितम् । देव ऋषयः एते तपस्विनः । किमेभिः । मुच्यन्तामिति । राज्ञा मुक्ताः । तैः पुनरपि वीर्यमास्थाय पंचाभिज्ञाः साक्षात-कृताः[1] ।

तथा नन्दोपनन्दो नागराजो मान्धातृबलं दृष्ट्वा असुरा ह्येते इति चतुरङ्गेन बलकायेन प्रत्युद्गतः । सैन्यदर्शनादेव भग्नः । देव करोटपाणयो यक्षा मायाधराः सदामत्ताश्च । सर्वे च नन्दोप-नन्दादयो भग्ना येन चातुर्महाराजिका देवास्तेनोपसंक्रान्ताः । उपसंक्रम्य चातुर्महाराजिकान् देवानिदमवोचन् । यत खलु मार्षा जानीध्वं महासैन्यं प्रत्युपस्थितम । सन्नह्यतां चतुरंगो बलकायः । वयं सर्वे भग्ना इति । तैः परिज्ञातम् । ते कथयन्ति । भवन्तः अयं मान्धाता राजा चक्रवर्ती शक्रं देवेन्द्रं दर्शनाय गच्छति । पुण्यमहीशाख्यश्चायम् । का शक्ति-रस्माकमनेन सार्धं संग्रामयितुम् । किन्तु अर्घं पाद्यं च गृहीत्वा प्रत्युद्गन्तव्यमिति । ततश्चातुर्महाराजिका देवा अर्घं पाद्यं च गृहीत्वा च्छत्रध्वजपताकाभिर्विविधैश्च वाद्यैः प्रत्युद्गताः । ततो राजा मान्धाता चातुर्महाराजिकान् देवान् प्रतिसंमोद्य देवैः परिवृतो देवांस्त्रयस्त्रिंशान् गतः । शक्रेण च देवेन्द्रेणार्धासनेनोपनिम-न्त्रितः । ततोऽसुराश्चतुरंगं बलकायं सन्नह्य शक्रं देवेन्द्रमभि-गताः । यक्षैः शक्रस्य देवेन्द्रस्यारोचितम् । यत् खलु कौशिक जानीया असुराः पञ्च गुल्मकान् भङ्क्त्वा प्रत्युपस्थिताः । यत्ते कृत्यं वा करणीयं वा तत्कुरुष्वेति । ततः शक्रो देवेन्द्रः संप्रस्थितः ।

1 From the Tibetan version it appears that this text skipped over long passages here.

राज्ञा मान्धात्राभिहितः। तिष्ठ अहमेव गच्छामीति। शक्रः कथयति एवं कुरुष्वेति। ततो राजा मान्धाता अष्टादशभिर्भटबलाग्रकोटीभिरुपरि विहायसमभ्युद्गम्य गुणास्फालनं कृतवान्। असुरा अष्टादश भटबलाग्रकोटीर्दृष्ट्वा अतिविभीषणं च शब्दं श्रुत्वा कर्णौ पिधाय निष्पलायिताः।

ततो राज्ञो मान्धातुरेतदभवत्। अस्ति मे जम्बुद्वीपे द्वीपः ऋद्धश्च स्फीतश्च क्षेमश्च सुभिक्षश्चाकीर्णबहुजनमनुष्यश्च पूर्वविदेहः अवरगोदानीयः उत्तरकुरुश्च। यत्त्वहं देवानां च मनुष्याणां च राज्यैश्वर्याधिपत्यं कारयेयमिति। सहचित्तोत्पादाद्राजा मान्धाता तस्य ऋद्धे परिहीने जम्बद्वीपमागत्य खरमाबाधितं प्रवेदितवान् गाथां च भाषते।

न कार्षापणवर्षेण तृप्तिः कामेषु विद्यते।
अल्पास्वादान् बहुदुःखान् कामान् विज्ञाय पंडितः।
अपि दिव्येषु कामेषु रतिं नैवाधिगच्छति॥
तृष्णाक्षये रतो भवति सम्यक्संबुद्धश्रावकः।
पर्वतोऽपि सुवर्णस्य समो हिमवता भवेत्।
नालमेकस्य तद्वित्तमिति विद्वान्समाचरेत्॥
यः प्रेक्षते दुःखमितो निदानं कामेषु जातु स कथं रमेत।
लोके हि शल्यमुपधिं विदित्वा तस्यैव धीरो विनयाय शिक्षते॥

ततः [स राजा मान्धाता निरर्गलं] यज्ञमिष्ट्वा गाथां भाषते[1]।

1 Cf. *Divyā.* p. 221, Tib. 344 a. ll. 4-7.

अल्पकं जीवितं ज्ञात्वा सुकृच्छ्रं सांपरायिकम् ।
करणीयानि पुण्यानि दुःखं ह्यकृतपुण्यतः ॥
तस्माद्धि पुण्यकामेन देयं दानं यथाविधि ।
कृतपुण्या हि मोदन्ते लोकेऽस्मिंश्च परत्र च ॥ इति[1] ।

भगवानाह । किं मन्यसे महाराज योऽसौ राजा मान्धाता अहमेव स तेन कालेन तेन समयेन । यन्मया इत्थं सत्त्वहितं कृतं तेन नानुत्तरं ज्ञानमधिगतम् । किं त्वेतद्दानमनुत्तरायाः सम्यक्संबोधेर्हेतुमात्रकं संभारमात्रकम्[2]।

पुनरपि महाराज यन्मया अनुत्तरां सम्यक्संबोधिं प्रार्थयिता सर्वहितं कृतं तच्छ्रूयताम् ।

भूतपूर्वं महाराज महासुदर्शनो नाम राजाभूत् चक्रवर्ती सप्ततिरत्नैः समन्वागतश्चतसृभिश्च मानुषिकाभिरिद्धिभिः[3] ।

विस्तरेण महासुदर्शनसूत्रे दीर्घागमे षट्सूत्रिकनिपाते ।

अथ महासुदर्शनो राजा धर्मप्रासादे पञ्च प्रत्येकबुद्धशतानि भोजयित्वा प्रत्येकं च दूष्ययुगेनाच्छादयित्वा गाथां भाषते ।

लब्ध्वा हि विपुलं भोगं न प्रमाद्येद्विचक्षणः ।
दद्यात्संपन्नशीलेभ्यो यत्र रिध्यन्ति दक्षिणाः ॥
एवं दत्त्वेह मेधावी श्राद्धो मुक्तेन चेतसा ।
अव्याबाधसुखे लोके उपपद्येत पंडितः ॥ इति ।

1 See Tib. 344 b, l. 3 ff. *Divyā*, p. 224 omits these verses while this text passes over the prose portion given in the *Divyā*. p. 224-5 & the Tibetan version, 344-345.

2 See Tib. 346a, l. I.

3 See Tib. 348b, l. 1.

स्यात् खलु ते महाराज अन्यः स तेन कालेन तेन समयेन महासुदर्शनो नाम राजा चक्रवर्ती चतुर्द्वीपेश्वरः सप्तभिरत्नैः समन्वागतश्चतसृभिश्च मानुषिकाभिरिद्धिभिरिति न खल्वेवं द्रष्टव्यम्। अपि त्वहमेव स तेन कालेन तेन समयेन महासुदर्शनो नाम राजा चक्रवर्ती चतुर्द्वीपेश्वरः सप्तभिरत्नैः समन्वागतश्चतसृभिश्च मानुषिकाभिरिद्धिभिः। स्यात् खलु ते महाराज तेन मया दानेन वा दानसंविभागेनानुत्तरा सम्यक्संबोधिरधिगता इति न खल्वेवं द्रष्टव्यम्। अपि तु तद्दानमनुत्तरायाः सम्यक्संबोधेर्हेतुमात्रकं प्रत्ययमात्रकं संभारमात्रकम्।

पुनरपि महाराज यन्मया अनुत्तरां सम्यक्संबोधिं प्रार्थयता दानानि दत्तानि पुण्यानि च कृतानि तच्छ्रूयताम्।

भूतपूर्वं महाराज वेलामो नाम ब्राह्मणमहासालोऽभूत्। स इदमेवंरूपं ब्राह्मणेभ्यो दानमदाच्चतुरशीतिनागसहस्राणां सुवर्णालंकाराणां सुवर्णध्वजानां हेमजालप्रतिच्छन्नानाम्[1]।

विस्तरेण वेलामसूत्रे मध्यमागमे ब्राह्मणनिपाते[2]।

स एवं दानानि दत्त्वा गाथां भाषते।

दानं दत्त्वा सुखी हि स्याद्दानं दत्त्वा विशारदः।
दानेन पूज्यते साधु देवेषु मनुजेषु च॥
तस्मात्संपत्तिकामेन दानं देयं विशारदैः।
मोक्षमाकांक्षता नित्यमैश्वर्यं च सुरालयम्॥

1 See Tib. 355a, l. 6.

2 It will be observed from the page references in the Tibetan version that omissions have been made in this Ms. for the sake of abridgement.

स्यात् खलु ते महाराज अन्यः स तेन कालेन तेन समयेन वेलामो नाम ब्राह्मणमहासालोऽभूत् । न खल्वेवं द्रष्टव्यम्। अहमेव स तेन कालेन तेन समयेन वेलामो नाम ब्राह्मणमहासालोऽभूवम्। मया तदेवंविधं ब्राह्मणेभ्यो दानं दत्तम्। स्यात् खलु ते महाराज तेन मया दानेन वा दानसंविभागेनानुत्तरा सम्यक्संबोधि[रधि]गतेति न खल्वेवं द्रष्टव्यम्। अपि तु तद्दानमनुत्तरायाः सम्यक्संबोधेर्हेतुमात्रकं प्रत्ययमात्रकं संभारमात्रकम्।

पुनरपि महाराज यन्मया अनुत्तरां सम्यक्संबोधिं प्रार्थयता दानानि दत्तानि पुण्यानि च कृतानि तच्छ्रूयताम्।

भूतभूर्वं महाराज शकुनो नाम राजाभूत् चक्रवर्ती चतुर्द्वीपेश्वरः सप्ततिरत्नैः समन्वागतश्चतसृभिश्च मानुषिकाभिरिद्धिभिः। शक्रस्य देवेन्द्रस्य सुहृद्वयस्यकः। तस्य राज्ञो न पुत्रो न दुहिता। स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। ईदृशे मम भोगैश्वर्ये न पुत्रो न दुहिता। ममात्ययादुद्दायादं कुलं भविष्यति। स शक्रेण देवेन्द्रेण दृष्टः। स कथयति। मार्ष कस्मात्त्वं करे कपोलं दत्त्वा चिन्तापरस्तिष्ठसि। स कथयति[1]। कौशिक ईदृशे मम महाभोगैश्वर्ये न पुत्रो न दुहिता। ममात्ययादुद्दायादं कुलं भविष्यति। स कथयति। मार्ष अहं ते ओषधिं प्रेषयिष्यामि। देव्यः पास्यन्ति। ततस्ते पुत्रा भविष्यन्ति दुहितरश्च। शक्रेण गन्धमादनात् पर्वतादोषधिरादाय तस्य राज्ञः प्रेषिता। राज्ञा अन्तःपुरस्यार्पिता। इमामोषधीं पास्यथ। तस्य राज्ञः अग्रमहिषी शयितिका। तामि-

1 Tib. 359a, l. 5.

स्तामनुत्थाप्यौषधिः पीता। सर्वास्ता आपन्नसत्त्वाः संवृत्ताः। ततः पश्चात्सा अग्रमहिषी व्युत्थिता। तया ता दृष्टा आपन्नसत्त्वाः। सा कथयति। किं युष्माभिः कृतं येनापन्नसत्त्वाः संवृत्ताः। ताः कथयन्ति। देवेनास्मभ्यमोषध्यः पानाय दत्ताः। किमर्थं [यु]ष्माभिरहं नोत्थापिता। अपितु कतरेण भाजनेन ओषध्यः पीताः। कुशमोटकं बद्ध्वा। कुत्र ते कुशाः। इमे तिष्ठन्ति। तया कुशाः प्रक्ष्याल्य पीताः। साप्यापन्नसत्त्वा संवृत्ता। ता अष्टानां वा नवानां वा मासानामत्ययात्प्रसूताः। सर्वासां पुत्रा जाताः। तस्या अप्यग्रमहिष्याः पुत्रो जातोऽष्टादशभिरवलक्षणैः समन्वागतः। सिंहवक्त्राकृतिमुखो महानग्नबलः। तस्य विस्तरेण जातस्य जातिमहं कृत्वा कुश इति नामधेयं व्यवस्थापितम्। स राजा [तं दृष्ट्वा विकोपं जनयते][1] तानन्यांश्च पुत्रान् दृष्ट्वा प्रसादं प्रवेदयते। प्रातिसीमकोट्टराजानः कथयन्ति। भवन्तो वयमनेन महाशकुनिराज्ञा सर्वे [अभि]भूता गच्छामः। तं राज्यात् च्यवयामः। ते आगत्य चतुरंगबलकायेन तस्य नगरं वेष्टयित्वावस्थिताः। राजा महाशकुनिर्न शक्नोति तैः सार्धं संग्रामयितुम्। स द्वाराणि बद्ध्वा प्राकाराणि मापयित्वावस्थितः। कुशो मातुः सकाशं गत्वा कथयति। अम्ब कस्यार्थे द्वाराणि बद्धानि। एष तव पिता कोट्टराजभिः सार्धं न शक्नोति संग्रामयितुम्। स एष द्वाराणि बद्ध्वावस्थितः। अम्ब अहमेभिः सार्धं संग्रामं संग्रामयामि। मम राजा रथमनुप्रयच्छ[तु]। पुत्र त्वम-

1 Tib. 360. 1. 1: དེ་ནི་སྡུག་པས་ལེ་སྡང་སྐྱེ་བར་འགྱུར་།

स्यानिष्टो द्वेष्यश्च। स एष तव किं रथं दास्यति। अम्ब गच्छ। गत्वा कथय। कुशः कुमार एभिः सार्धं संग्रामयिष्यति। रथमनुप्रयच्छ। तया गत्वा राजाभिहितः। देव कुमारः कथयति। अहमेभिः सार्धं संग्रामयामि। रथमनुप्रयच्छ। तेन तस्य रथोऽनुप्रदत्तः। स द्वौ तूणौ बद्धा रथमधिरुह्य निर्गन्तुमारब्धः। शक्रो देवेन्द्रः संलक्षयति। इमे कोट्टराजानो बलवन्तः। कोऽयं कुशः कुमारो भद्रकल्पीयो बोधिसत्त्वः खेदमापत्स्यते। साहाय्यमस्य कल्पयितव्यम्। तेन तस्य शंखचक्रगदानुप्रदत्ता। बोधिसत्त्व एभिस्त्वं जीविकां कल्पय। स द्वाराण्युद्घाट्य निर्गतः। स शंखमापूरयति। तदा शंखशब्देन सेना विद्रावयति। केचित्तेन शब्देन बधिरीभूताः। निष्पलायन्ति केचित्कर्णौ पिधाय। यदि चक्रं गदां क्षिपन्ति तद्रसातलं प्रविशति। ते[न] रणमध्यं गत्वा शंखमापूरितम्। सर्वेषां कर्णानि स्फुटितानि। ते पुरुषराक्षसोऽयमिति कृत्वा निष्पलायिताः। स सर्वसामन्तविजयं कृत्वा पितुः सकाशमागतः। देव मया देशः प्रसाधितः। सर्वराजानो निर्जिताः। इति श्रुत्वा राजा महाशकुनिस्तुष्टः। स संलक्षयति। कुशः कुमारो बलवान् वीर्यसंपन्नः। कथमहमस्यान्तिके अप्रसादं प्रवेदयामि। स तस्यान्तिके प्रसादं प्रवेदयितुमारब्धः। तेन ते पुत्रा निवेशिताः। कुशस्यापि दारिकां याचितुमारब्धः। सर्वे ते कथयन्ति। दास्यामो दारिकां कुशवर्जम्। अन्यतमेन राज्ञान्यतमस्य राज्ञो दुहिता याचिता। न तावदुद्वाहः क्रियते। यावन्महाशकुनिराज्ञान्यस्य पुत्रस्यार्थे व्याजान्तरेण

सा दारिका कुशस्यानुप्रदत्ता। नक्षत्रदिवसमुहूर्तदिवसं दृष्ट्वा च कुशः कुमारो निवेशितः। राजा कथयति। भवन्तो न के[न]-चित्कुशस्यादर्शः समर्पयितव्यो नाप्यभिषेकपात्रेण स्नापयितव्यः। नच दिवान्तःपुरे प्रवेशो दातव्यः। कुशः कुमारो मातृभिः सार्धं क्रीडति। तया पत्न्या दृष्टः। सा कथयति। क एष पिशाचः कुमाराणां मध्ये क्रीडति। एष तव स्वामी भविष्यति। भूयोऽपि तया कुमारैः सार्धं जलक्रीडनया क्रीडन् दृष्टः। यावत् तत्रैव स्वामी। कीदृशो मम स्वामी भविष्यति। सा संलक्षयति। प्रत्यक्षीकरिष्यामि। तया प्रदीपं प्रज्वाल्य कुण्डीरकेण प्रच्छाद्य स्थापितः। स चान्तःपुरं प्रविष्टः। तया च प्रदीपः प्रदर्शितः। यावत्पश्यति अष्टादशभिरवलक्षणैः समन्वागतो सिंहवक्त्राकृतिमुखश्च। सा कथयति पिशाचः पिशाच इति कृत्वा निष्पलायिता। राज्ञो महाशकुनिनोऽन्यतमं कार्वटिकं व्युत्थितम्। तेन कुशः कुमारः प्रेषितः। गच्छ का[र्व]टिकं सन्नामय। स तत्र गतः। कुशपत्न्या मातापित्रोः संदिष्टम्। किं युष्माकं पृथिव्यां पुरुषा न सन्ति याहं युष्माभिः पिशाचस्यानुप्रदत्ता। यदि मम नयथेति एवं कुशलम्। नोचेदहमात्मानं प्रघातयिष्ये। सा तैर्नीता। कुशोऽपि कुमारस्तं कार्वटिकं निर्जित्यागतः। स मातरं पृच्छति। अम्ब कुत्र सा मम पत्नी। सा कथयति। मातापितृभ्यां नीता। कस्यार्थम्। त्वं पिशाच इति कृत्वा। अम्ब गच्छामि तामानयामि। पुत्रैवं कुरुष्व। स शंखचक्रगदामादाय संप्रस्थितः। यावदन्यतमस्मिन्कर्वटके सिंहभयेन महाजनकाया द्वाराणि बद्ध्वा दिशोऽनुव्यवलोकयन्तस्तिष्ठन्ति।

कुशः कुमारः कथयति । किमेवं तिष्ठथ। सिंहभयात् । किं न प्रघा-तय[थ]। न शक्नुमः । यद्यहं प्रघातयामि किं ममानुप्रयच्छथ । चतु-रंगस्य बलकायस्यार्धम् । कुशेन कुमारेण सिंहसमीपं गत्वा शंखः आपूरितः । तस्य कर्णौ स्फुटितौ । कालं गतः । स तं गृहीत्वा कर्वटकं गतः । भवन्तः अयं स सिंहः। गृह्णन्तु चतुरंगस्य बलकायस्यार्धम् । स कथयति । युष्माकमेव हस्ते तिष्ठतु । प्रतिनिवृत्ततो दास्यथ[1] । तस्य यस्मिन्कर्वटके सा पत्नी तं च कर्वटकं गतः । मालाकारसकाश-मुपसंक्रान्तः। कस्त्वमीदृशः। स कथयति । मालिकपुत्रः। किं तव नाम । वृजिक इति[2] । कुशला भवन्ति बोधिसत्त्वास्तेषु तेषु शिल्पस्थानकर्मस्थानेषु । स शोभनां मालां ग्रथ्नाति । स मालिकस्तस्या दारिकायास्तां माला[म]नुप्रयच्छति । सा कथ-यति । न त्वं कदाचिदीदृशीं मालां ग्रथितपूर्वः । किमत्र कारणम् । ममान्तेवासिना ग्रथितम् । पश्यामि तवान्तेवासि-नम् । तेन स तत्र नीतस्तया दृष्टः । सा संलक्षयति। कोऽयं पिशाच आगतः । तया शब्दः कृतः । पिशाचः पिशाच इति निष्कासितः । सूपकारसकाशं गतः । स कथयति । कस्त्वमिति । अहं सूपकारपुत्रः । किंनामा त्वम् । स्थालीसुगन्धो नाम । [स] शोभनं साधनपचनं करोति। स सूपकारस्तस्या दारिकायास्तं साधनपचनं समर्पयति । सा दारिका कथयति । भोः पुरुष शोभनसाधनपचनस्य को योगः । ममान्तेवासिना साधितम् ।

1 Tib. 362a, l. 5: སླར་ལོངས་ན་བྱིན་ཅིག། | See Infra, p. 105

2 Tib. 362a, l. 6: སྤོང་བྱེད་དོ། |

पश्यामि तवान्तेवासिनम्। यावत्तत्रापि स निष्कासितः। वैद्य-सकाशं गतः। स कथयति। कस्त्वम्। वैद्यपुत्रः। किंनामा त्वम्। आत्रेयो नाम। तस्या दारिकायाः शिरोर्तिः प्रादुर्भूता। तां वैद्या न शक्नुवन्ति स्वस्थीकर्त्तुम्। स वैद्यश्चिन्तापरो व्यवस्थितः। स कथयति। उपाध्याय किं चिन्तापरो भवसि। राजदुहित्याः शिरोर्तिः। न शक्नुमः स्वस्थीकर्त्तुम्। गच्छाम्यहं स्वस्थीकरोमि। स गतस्तया दृष्टः। सा संलक्षयति। कोऽयं पिशाच आगतः। भूयः संलक्षयति। यदि किंचिद्वक्ष्यामि न मे स्वस्थीकरिष्यति। यदाहं स्वस्थीभवेयं तदा निष्कासयिष्ये। सा तेन स्वस्थीकृता। तदा शब्दः कृतः पिशाचः पिशाच इति। स तया निष्कासितः। अमात्यसकाशं गतः। कस्त्वम्। अहं सहस्रयोधी। तैस्तस्य संग्रहः कृतः। सा राजदुहिता येन लब्धपूर्वा तेन श्रुतम्। या सा मम राजदुहिता लब्धपूर्वा सा कुशं कुमारं परित्यज्य स्वगृहं गता। तेन तस्य राज्ञः संदिष्टम्। यदि तावन्मे दारिकामनुप्रयच्छसीति एवं कुशलम्। नोचेद्राज्यात् च्यावयिष्ये। स कथयति। एषा मम दुहिता राज्ञो महाशकुनेः पुत्रस्य कुशस्य कुमारस्य प्रदत्तिका। किमिदानीमन्यस्मै दास्ये। स चतुरङ्गेण बलकायेनागत्य तस्य राजधानीं वेष्टयित्वावस्थितः। स राजा तेन सार्धं न शक्नोति संग्रामं संग्रामयितुम्। स द्वाराणि बद्ध्वावस्थितः। कुशः कुमारोऽमात्यानामंत्रयते। कस्माद्भवन्तो द्वाराणि बद्धानि। तैस्तस्य विस्तरेणारोचितम्। कुशः कुमारः कथयति। यदि मम राजा दुहितरमनुप्रयच्छति अहं तेन सार्धं संग्रामं संग्रामयिष्ये। तैः राज्ञ आरोचितम्। स कथयति। एषा मया

दुहिता महाशकुनेः पुत्रस्य दत्तिका। कथमहमस्य दास्ये। अपि च दारिकार्थेऽयं संरम्भः। अमात्याः कथयन्ति। देव ए[ष] ताव[द]-नेन सार्धं संग्रामं संग्रामयतु। न ज्ञायते कस्य जयो भविष्यति। तत्र वयं कालज्ञा भविष्यामः। कुशः कुमारः पंचशतिके द्वौ तूणौ बद्ध्वा शंखचक्रगदां च गृहीत्वा निर्गतः। तेन शंखमापूरितम्[1]। तेषां कर्णानि स्फुटितानि। निष्पलायिताः। सा राजदुहिता संलक्षयति। अयं कुशः कुमारो महावीर्यपराक्रमः। कथमहमस्यान्तिके अप्रसादं प्रवेदयिष्ये। सा तस्य प्रसादं प्रवेदितवती। राजानमिदमवोचत्। यथा प्रतिज्ञातं तत्कुरु। पुत्रि त्वं मया कुशस्यानुप्रदत्तिका। तात स एवायं कुशः कुमारः। पुत्रि यद्येवं गच्छ। तेन तस्य चतुरंगो बलकायोऽनुप्रदत्तो महता सत्कारेण सानुप्रेषिता।

स तं कर्वटकं गतः। स तेषां कथयति। भवन्तः अनुप्रयच्छत अस्माकं चतुरंगस्य बलकायस्यार्धम्। ते कथयन्ति। कुमार [चतु-रङ्गो बलकायः] उदकस्यौघमदृशं गतः। येन चतुरंगो बलकाय ऊढस्तत्र नातिदूरे एढकाश्चरन्ति। कुशः कुमारो गाथां भाषते।

हस्तिनो यत्र उह्यन्ते कुंजराः षष्टिहायनाः।
उपमानेन विज्ञेया ऊढास्तत्र गवेडकाः[2] ॥

यदि तावदनुप्रयच्छथ इत्येवं कुशलम्। नो चेदनुप्रयच्छथ महामर्यादाबन्धं करिष्यामि। तैस्तस्यानुप्रदत्तम्।

1 Tib. 363b, l. 6.

2 Tib. 364a, l. 4: གཞན་དུ་དཔུང་གི་ཚོགས་ཡན་ལག་བཞི་ཁྱེར་བའི་ཆུ། །
བླུག་པ་གང་ཡིན་པ་དེ་ལྟ་བུར་ངོ་།

स नद्यास्तीरे वासमुपगतः। स श्रान्तकायो नदीमवतीर्णः स्नानाय। तत्र स्वमुखबिम्बो दृष्टः। स संलक्षयति। अष्टादशभिरवलक्षणैः समन्वागतः सिंहवक्त्राकृतिमुखश्च। अत एव इयं राजदुहिता ममान्तिके अप्रसादं प्रवेदयति। किमीदृशेन मम जीवितेन प्रयोजनम्। गच्छाम्यात्मानं प्रघातयामि। सोऽन्यतमं गहनं प्रविश्यात्मानमुद्बन्धितुमारब्धः। शक्रो देवेन्द्रः संलक्षयति। अयं भद्रकल्पीयो बोधिसत्त्वो रूपशोभाविरहादात्मानं प्रघातयति। पूरयितव्योऽस्य मनोरथः। शक्रः कथयति। कुमार मा खेदमापत्स्यसे मा आत्मानं प्रघातय। इमं चूडामणिं शिरसि धारय पूर्णमनोरथो भविष्यसि। इत्युक्त्वा प्रक्रान्तः। कुशः कुमारोऽन्तःपुरं प्रविशितुमारब्धः। दौवारिकेण पुरुषेण निवार्यते। कुशकुमारस्यायमन्तःपुरं मा प्रविश। स कथयति। स एवाहं कुशः। ते न श्रद्दधति। तेन चूडामणिरपनीतः। यथा पौराणः संवृत्तः। ते श्रद्धिताः। कुशः कुमारः संलक्षयति। इहैव तिष्ठामि। तेन पितुः संदिष्टम्। तात अनुजानीष्व माम्। इहैव तिष्ठामि। शक्रेण देवेन्द्रेणास्य चत्वारो धातुगोत्राः[1] प्रदर्शिताः। तेन सा पुरी चतूरत्नमयीं कृत्वा प्रतिष्ठापिता। कुशेन कुमारेण वासितमिति कुशावती कुशावतीति संज्ञा संवृत्ता। स राजा संवृत्तः। कुशो नाम बलचक्रवर्ती तेषु षष्टिषु नगरसहस्रेषु यज्ञवाटानि मापयित्वा बहूनि वर्षाणि बहूनि वर्षशतानि बहूनि वर्षसहस्राणि

1 Tib. 365a. 1. 1: གཏེར་ བཞིའི་འབྱུང་ཁུངས།

बहूनि वर्षशतसहस्राणि ब्राह्मणेभ्यो दानमदात्। स आत्मनो यज्ञसंपदं दृष्ट्वा गाथां भाषते।

समृद्धिमात्मनो दृष्ट्वा देवेषु मनुजेषु च।
को दानं न प्रयच्छेत संपत्तिर्येन लभ्यते॥
प्रत्यूह्य योऽयं शतानि पुंसां मात्सर्यमाक्रम्य सपत्नभूतम्[1]।
ददाति दानं परलोकभीरुः शूरेष्वसौ शूरतरो मतो मे॥
न तं हि शूरं मुनयो वदन्ति यः शस्त्रपाणिर्विचरत्यनीके।
दानं प्रयच्छन्ति विशारदा ये शूरांस्तु तान्सर्वविदो वदन्ति॥

स्यात् खलु ते महाराजान्यः स तेन कालेन तेन समयेन कुशो नाम राजा बभूव बलचक्रवर्ती येन तत्षष्टिषु नगरसहस्रेषु दानानि दत्तानि पुण्यानि कृतानि। न खल्वेवं द्रष्टव्यम्। अपि त्वहमेव तेन कालेन तेन समयेन कुशो नाम राजाभूवं बलचक्रवर्ती। मयैव तत्षष्टिषु नगरसहस्रेषु यज्ञवाटानि मापयित्वा दानानि दत्तानि पुण्यानि कृतानि। स्यात् खलु ते महाराज तेन मया दानेन वा दानसंविभागेन वानुत्तरा सम्यक्-संबोधिरभिसंबुद्धेति। न खल्वेवं द्रष्टव्यम्। अपि त्वभून्मे तद्दानमनुत्तरायां सम्यक्संबोधौ हेतुमात्रकं प्रत्ययमात्रकं वा संभारमात्रकं वा।

भिक्षवो बुद्धं भगवन्तं पृच्छन्ति। किं भदन्त कुशेन राज्ञा कर्म कृतं यस्य कर्मणो विपाकेनाष्टादशभिरवलक्षणैः समन्वागतः

1 Tib. 366a, l. 5: གང་གིས་སྐྱེས་བུ་བརྒྱ་ཕྲག་ཕྱིན་པ་གཞན་ཅིང་། སེར་སྣ་དགྲ་བོར་གྱུར་པ་ཟིལ་གནོན་ནས།

आढ्ये महाधने महाभोगे कुले जातः। भगवानाह। कुशेनैव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितानि अवश्यंभावीनि। कुशेनैव भिक्षवः कर्माणि कृतान्युपचितानि कोऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातौ। अपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवोऽन्यतमस्मिन् कर्वटके गृहपतिः प्रतिवसति। स प्रभूतं खादनीयभोजनीयं गृहीत्वोद्यानं गतः। असति बुद्धानां भगवतामुत्पादे प्रत्येकबुद्धा लोके उत्पद्यन्ते हीनदीनानुकंपकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य।

अथान्यतमः प्रत्येकबुद्धो जनपदचारिकां चरंस्तदुद्यानमनुप्राप्तः। तेन गृहपतिना दृष्टः। तेन पौरुषेयाणामाज्ञा दत्ता। भवन्तो निष्कासयतैनं प्रव्रजितम्। ते नोत्सहन्ते निष्कासयितुम्। तेन गृहपतिना स्वयमेवोत्थाय गृहीत्वा निष्कासितः उक्तश्च। सिंहमुखाष्टादशभिरवलक्षणैः समन्वागतः कुत्र त्वं प्रविशसि। प्रत्येकबुद्धः संलक्षयति। मा हैवायं तप्येत अत्यन्तक्षतश्चोपहतश्चेति विदित्वोपरि विहायसमिति विस्तरः।

यावत्तेन सत्कृतो यावत्पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः। यन्मया एवंविधे सद्भूतदक्षिणीये खरं वाक्कर्म निश्चारितं नाहमस्य

कर्मणो भागी स्याम्। यत्तु काराः कृता अनेनाहं कुशलमूलेनाढ्ये महाधने महाभोगे कुले जायेय। किं मन्यध्वे भिक्षवो योऽसौ गृहपतिरेष एवासौ कुशः। यदनेन प्रत्येकबुद्धस्यान्तिके खरं वाक्कर्म निश्चारितं तस्य कर्मणो विपाकेनाष्टादशभिरवलक्षणैः समन्वागतः सिंहवक्त्राकृतिमुखश्च संवृत्तः। यत्तु काराः कृतास्तस्य कर्मणो विपाकेन राजा संवृत्तो बलचक्रवर्ती। इति हि भिक्षवः एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः। व्यतिमिश्राणां व्यतिमिश्रः। एकान्तशुक्लानामेकान्तशुक्लः। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यम्। एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः[1]।

पुनरपि महाराज यन्मयानुत्तरां सम्यक्संबोधिं प्रार्थयता दानानि दत्तानि पुण्यानि च कृतानि तच्छ्रूयताम्। भूतपूर्वं महाराज कलिंगेषु त्रिशंकुर्नाम मतंगराजोऽभूत्। अनेकमतंगशतपरिवारोऽनेकमतंगसहस्रपरिवारोऽनेकमतंगशतसहस्रपरिवारो मैत्र्यात्मकः कारुणिकः सर्वसत्त्वहितानुकंपी। तस्य विषये यदा दुर्भिक्षं भवति तदा सत्योपयाचनेन देवो वर्षति। न कदाचिद्दुर्भिक्षं भवति। स ऋषिमध्ये प्रव्रजितः। तेन पञ्चाभिज्ञाः साक्षात्कृताः। तेन खलु समयेन वाराणस्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च। यावदपरेण समयेन नैमित्तिकैर्द्वादशवार्षिकी अनावृष्टिर्व्याकृता। ततो राज्ञा ब्रह्मदत्तेन वाराणस्यां नगर्यां घंटावघोषणं

1 Cf. *Mahāvastu*, II, pp. 433f.; *Jātaka*, vol. V.

कारितम्। शृण्वन्तु भवन्तो वाराणसीनिवासिनः पौराः। नैमित्तिकै र्द्वादशवार्षिकी अनावृष्टिर्व्याकृता। यस्य युष्माकमियन्तं कालमन्नमस्ति स तिष्ठतु। यस्य नास्ति स गच्छत्विति। ततः स जनकायो दुर्भिक्षकालमृत्युभयभीतः संजल्पं कर्तुमारब्धः। भवन्तो राज्ञा एवं विजितेऽयं घंटावघोषणं कारितम्। कथं प्रतिपत्तव्यं कुत्र गच्छाम इति। तैः श्रुतं मतंगविषये मतंगजातीयः ऋषिः। अस्य सत्योपयाचनेन देवो वर्षतीति। ततो येषां द्वादशवार्षिकं भक्तं नास्ति ते मतंगविषयं गताः। मतंगजातीयस्य ऋषेः पुत्रो मतंगराजः। तेन तस्य जनकायस्य द्वादशवर्षाण्यन्नपानेन योगोद्वहनं कृतम्। समनुबद्ध एव दुर्भिक्षः प्रादुर्भूतः। राज्ञा ब्रह्मदत्तेन अमात्याः पृष्टाः। कुत्रासौ जनकायो गत इति। अमात्याः कथयन्ति। देव कलिंगविषये त्रिशंकुर्नाम मतङ्गराजो मैत्र्यात्मकः कारुणिको महात्मा सर्वसत्त्वहितवत्सलः। तस्य सत्योपयाचनेन देवो वर्षति। तत्र महाजनकायो गतः। राजा कथयति। भवन्तो महादुर्भिक्षोऽयं दुर्भिक्षान्तरकल्पसदृशः। कथमत्र प्रतिपत्तव्यमिति। ते कथयन्ति। देव श्रूयते योऽसौ मतङ्गविषये राजा ऋषिषु प्रव्रजितः सोऽध्येषितव्य इति। ततो राजा ब्रह्मदत्तो मतङ्गविषयं गत्वा तमृषिमध्येषितुमारब्धः। महर्षे मम विजिते महादुर्भिक्षं दुर्भिक्षान्तरकल्पसदृशम्। तदर्हसि सत्योपयाचनं कर्तुमिति। स सत्योपयाचनं कर्तुमारब्धः।

श्वपाकानां कुले जातो मतङ्गो दुष्टहिंसकः।
त्रिशंकुरिति विख्यातो देवेषु मनुजेषु च॥

येन मे सत्यवाक्येन मैत्रं चि[त्तं] सुभावितम्।
अखिलं सर्वसत्त्वेषु नागेमास्तर्पय प्रजाः ॥
जन्मप्रभृति यस्मान्मे मैत्रं चित्तं सुभावितम्।
अनेन सत्यवाक्येन नागेमास्तर्पय प्रजाः ॥

ततः सत्योपयाचनेन वाराणस्यां देवो वृष्टः। दुर्भिक्षं निवृत्तं सुभिक्षं प्रादुर्भूतम्। ततो वाराणसीनिवासी जनकायो मतङ्गविषयाद्वाराणसीमागतः। स्यात् खलु ते महाराजान्यः स तेन कालेन तेन समयेन त्रिशंकुर्नाम मतङ्गराजोऽभूत् मैत्र्यात्मकः कारुणिकः सर्वसत्त्वहितानुकंपी यस्य सत्योपयाचनेन देवो वृष्टः दुर्भिक्षं निवृत्तं सुभिक्षं प्रादुर्भूतमिति। न खल्वेवं द्रष्टव्यम्। अपि त्वहमेव स तेन कालेन तेन समयेन त्रिशंकुर्नाम मतङ्गराजो बभूव मैत्र्यात्मकः कारुणिकः सर्वसत्त्वहितानुकंपी यस्य सत्योपयाचनेन देवो वृष्टः। स्यात् खलु ते महाराज मया दानेन वा दानसंविभागेन वा अनुत्तरा सम्यक्संबोधिरधिगता। न खल्वेवं द्रष्टव्यम। अपि त्वभूत्तद्दानमनुत्तरायां सम्यक्संबोधौ हेतुमात्रकं वा संभारमात्रकं वा।

पुनरपि महाराज यन्मया अनुत्तरां सम्यक्संबोधिं प्रार्थयिता दानानि दत्तानि पुण्यानि कृतानि तच्छ्रूयताम्। भूतपूर्वं महाराज मिथिलायां महादेवो नाम राजाभूच्चक्रवर्ती।

विस्तरेण महादेवसूत्रे[1] मध्यमागमे राजसंयुक्तकनिपाते।

स आत्मनो यज्ञसम्पदं दृष्ट्वा गाथां भाषते च।

1 Cf. *Makhādeva Jātaka.*

ऐश्वर्यं प्रार्थमानेन देवेषु मनुजेषु वा।
दानं देयं यथाशक्त्या दारिद्र्यभयभीरुणा॥
लोके संपूज्यते दाता दाता देवेषु पूज्यते।
शरण्यः सर्वभूतानां पक्षिणां वा फलद्रुमः॥ इति।

स्यात् खलु ते महाराजान्यः स तेन कालेन तेन समयेन महादेवो नाम राजा चक्रवर्ती येन तं नियतं कल्याणं धर्मं प्रवर्तितम्। यन्नियतं कल्याणं वर्त्म प्रवृत्तमागम्य चतुरशीतिर्महादेवसहस्राणि राजर्षयो ब्रह्मचर्यमचार्षुरिति। न खल्वेवं द्रष्टव्यम्। अहमेव तेन कालेन तेन समयेन महादेवो नाम राजाभूवं चक्रवर्ती। मयैव तन्नियतं कल्याणं धर्मं प्रवर्तितम्। यन्नियतं कल्याणं वर्त्म प्रवृत्तमागम्य चतुरशीतिर्महादेवसहस्राणि राजर्षयो ब्रह्मचर्यमचार्षुः। स्यात् खलु ते महाराज तेन मया दानेन वा दानसंविभागेन वा अनुत्तरा सम्यक्संबोधिरधिगतेति। न खल्वेवं द्रष्टव्यम्। अपितु तद्दानमनुत्तरायाः सम्यक्संबोधेर्हेतुमात्रकं प्रत्ययमात्रकं सम्भारमात्रकम्।

पुनरपरं महाराज यन्मयानुत्तरां सम्यक्संबोधिमभिप्रार्थयिता दानानि दत्तानि पुण्यानि कृतानि तच्छ्रूयताम्। भूतपूर्वं महाराज अस्यामेव मिथिलायां तेषामपश्चिमको निमिर्नाम राजाभूच्चक्रवर्ती।

विस्तरेण निमिसूत्रे [मध्यमागमे] राजसंयुक्तकनिपाते।

सोऽप्यात्मनो यज्ञसम्पदं दृष्ट्वा भाषते [च]।
शुभकर्मकृतो दृष्ट्वा तथाप्यशुभकर्मणः।
ये प्रमाद्यन्ति मनुजाः शोच्यास्ते पुरुषाधमाः॥ इति।

अथ शक्रो देवानामिन्द्रो निमिं राजानमिदमवोचत्। वस निमे रमस्व निमे इहैव पञ्चभिः कामगुणैः समन्वितः समन्वङ्गीभूतः क्रीड रम परिचारयेति[1]। स गाथां भाषते।

यथा याचितकं भाण्डं तावत्कालं रथी यथा[2]।
तथोपममिदं स्थानं परेषां वशवर्ति यत्[3]॥
यतोऽहं मिथिलां गत्वा करिष्ये कुशलं बहु।
आगमिष्ये ततः स्वर्गं कृतपुण्यः कृतोदयः॥ इति।

स मिथिलामागत्य दानानि दत्त्वा पुण्यानि कृत्वा गाथां भाषते।

सन्तो दानं प्रशंसन्ति यदापत्सु प्रदीयते।
क्षत्रिये ब्राह्मणे वैश्ये शूद्रे चण्डालपुक्कसे॥
दानं दत्त्वा च दुर्भिक्षे तर्पयित्वा च सज्जनान्।
अपायान् वर्जयित्वेह स्वर्गलोके महीयते॥
आनुशंसमिमं ज्ञात्वा दानं देयं मनीषिभिः।
दानात्संपद्यते मोक्षश्चैश्वर्यं च सुरालयः॥ इति।

स्यात् खलु ते महाराजान्यः स तेन कालेन तेन समयेन निमिर्नाम राजाभूच्चक्रवर्ती यो देवांस्त्रयस्त्रिंशान् गतः शक्रेण देवेन्द्रेणार्धासनेनोपनिमन्त्रितो दिव्यैश्च पञ्चभिः कामगुणैः सम-

1 Cf. *Nimi Jātaka*. Nimi was requested by Indra to share his throne with him.

2 Tib. 374a, l. 3: ཇི་ལྟར་སྣོད་དང་ཤིང་རྟ་དག། བརྙས་པ་རེ་ཤིག་དུས་ཡིན་ལྟར།

3 *Jātaka*, IV, p. 358; VI, p. 127;

यथा याचितकं यानं यथा याचितकं धनम्।
एवं सम्पदं एवेतं यं परतो दानपच्चया॥

न्वितः समन्वङ्गीभूतः क्रीडितवान् । [न खल्वेवं द्रष्टव्यम् ।]अहमेव स तेन कालेन तेन समयेन। मयैव तानि मिथिलामागत्य चतुर्षु नगर-द्वारेषु यज्ञवाटानि मापयित्वा दानानि दत्तानि पुण्यानि कृतानि। स्यात् खलु ते महाराज तेन दानेन वा दानसंविभागेन वानुत्तरा सम्यक्संबोधिरधिगतेति। न खल्वेवं द्रष्टव्यम् । अपितु तद्दानमनुत्त-रायाः सम्यक्सम्बोधेर्हेतुमात्रकं प्रत्ययमात्रकं सम्भारमात्रकम् ।

ततोऽर्वाग् आनन्दो नाम राजाभूत् प्राभाव्यः। विस्तरेण यावत्तस्यैको द्वौ यावत्पञ्च पुत्रा जाताः। योऽसौ तस्य पश्चिमकः पुत्रस्तस्यादर्शप्रख्यं मुखम्। तस्यादर्शमुख इति संज्ञा संवृत्ता। स उन्नीतो वर्धितो महान् संवृत्तः। आदर्शमुखः कुमारः सुरतः सुदान्तः। तदन्ये ते चण्डा रभसाः कर्कशाः। सर्वे ते पितुरर्थकरणे निषण्णा न किञ्चित्प्रज्ञया प्रतिविध्यन्ति। आदर्शमुखः कुमारो गम्भीरगम्भीरान् प्रश्नान् स्वप्रज्ञया नितीरयति। आनन्दो राजा ग्लानः संवृत्तः। स संलक्षयति। कं राजत्वे प्रतिष्ठापयामि। स चेदहं पूर्वकाणां चतुर्णां भ्रातृणामन्यतमान्यतमं राजत्वे प्रतिष्ठापयिष्यामि एते चण्डा रभसाः कर्कशा जनपदाननयेन व्यसनमापादयिष्यन्ति। सचेदादर्शमुखं कुमारं राज्ये प्रतिष्ठापयिष्यामि ज्ञातीनां गर्ह्यो भविष्यामि। कथमिदानीमयं राजा ज्येष्ठपुत्रानपास्य कनीयांसं राज्ये प्रतिष्ठापयतीति। अपि तूपायसंविधानं कर्तव्यम्। सोऽमात्यानामन्त्रयते। हंत ग्रामण्यो ममात्ययाद्युष्माभिरेकैकः कुमारः परीक्षितव्यः। यस्य मणिपादुकायुगं प्रावृतं तुल्यं भवति।

1 Tib. 375b, l. 4.

सिंहासनं निषण्णस्य निष्कम्पं तिष्ठते। मुकुटं च मूर्ध्नि उपनिबद्धं निश्चलं भवति। अन्तःपुरश्चाभ्युत्थानं कुरुते। षट् प्रज्ञाप्रतिवेदनीयानि ज्ञातव्यानि अन्तर्निधिर्बहि[र्निधि]रन्तर्बहिर्निधिः वृक्षाग्रे निधिः [पर्वताग्रे निधि]रुदकान्ते निधिः। यस्य सर्वाण्येतानि समाभवन्ति स युष्माभिर्ममात्ययाद्राज्ये प्रतिष्ठापयितव्य इत्युक्त्वा 'सर्वक्षयान्ता निचयाः पतनान्ताः समुच्छ्रया' इति यावत् कालगतः। तैरमात्यैर्ज्येष्ठस्य कुमारस्य मणिपादुकायुगं समर्पितम्। समत्वं न कारयति। निषण्णस्य सिंहासनं प्रकम्पितम्। मुकुटमाबद्धं चलति। अन्तःपुरेणाप्यस्याभ्युत्थानं न कृतम्। षट् प्रज्ञाप्रतिसंवेदनीयान्यारोचितानि। न जानाति न विजानाति। एवं त्रयाणां भ्रातृणाम्। आदर्शमुखस्य कुमारस्य मणिपादुकायुगं समर्पितम्। समं स्थितम्। निषण्णस्य च सिंहासनं निष्कम्पं व्यवस्थितम्। मुकुटमाबद्धं मूर्ध्नि पूरयित्वा स्थितम्। अन्तःपुरेण चास्याभ्युत्थानं कृतम्। अमात्याः कथयन्ति। अस्यापि षट् प्रज्ञाप्रतिवेदनीयानि ज्ञातव्यानि अन्तर्निधिर्बहिर्निधिरन्तर्बहिर्निधिर्वृक्षाग्रे निधिः पर्वताग्रे निधिरुदकान्ते निधिः। आदर्शमुखः संलक्षयति। अन्तर्निधिरिति किम्। अन्तर्निधिर्देहल्या अभ्यन्तरनिधिः। बहिर्निधिरिति किम्। बहिर्निधिर्देहल्या बहिर्निधिः। अन्तर्बहिर्निधिरिति किम्। अन्तर्बहिर्निधिर्देहल्या मध्ये निधिः। वृक्षाग्रे निधिरिति किम्। वृक्षस्याग्रे निधिः। तस्य राज्ञः संस्थानवृक्षस्तस्य मध्याह्ने यत्र छाया स्फुरित्वा तिष्ठति तत्र निधिः। पर्वताग्रे निधिः। तस्य राज्ञः क्रीडापुष्करिणी तत्र स्नानशिला तस्याधस्तान्निधिः। उदकस्यान्ते

निधिरिति। यत्र गृहस्योदकं निर्गच्छति ग्रामान्ते[1] निधिः। तरमात्यैः सर्वाणि प्रत्यवेक्ष्याहृतानि। स तैं राज्येऽभिषिक्तः। राजा संवृत्तः। आदर्शमुखो नाम राजा प्राभाव्यः।

अन्यतमस्मिन् कर्वटके दण्डी नाम ब्राह्मणः प्रतिवसति। तेन गृहपतिसकाशाद्बलीवर्दान् याचित्वा दिवा वाहयित्वा तान् बलीवर्दानादाय तस्य गृहपतेर्निवेशनं गतः। यावत्स गृहपतिर्भुङ्क्ते। दण्डिना ते बलीवर्दाः प्रवेशिताः। अन्येन द्वारेण प्रक्रान्ताः। स गृहपतिर्भुक्त्वा व्युत्थितः। यावद्बलीवर्दान्न पश्यति। तेन दण्डी गृहीतः। कुत्र बलीवर्दाः। स कथयति। गृहं प्रवेशिताः। त्वया मम बलीवर्दा हारिताः। अनुप्रयच्छ मे बलीवर्दान्। स कथयति नाहं हारयिष्ये। स कथयति। अयमादर्शमुखो राजा प्राज्ञस्तस्य सकाशं गच्छावः। स एतमर्थं नितीरयित्वा अस्माकं युक्तमयुक्तं वक्ष्यति। तौ संप्रस्थितौ।

अन्यतमस्य पुरुषस्य निष्पलायते वडवा। तेन दण्डी उच्यते धारय मे एतां वडवाम्। कथं धारयामि। यथा शक्नोषि। तेन पाषाणं गृहीत्वा शिरसि प्रहारो दत्तः। सा कालगता। स पुरुषः कथयति। त्वया मे वडवा प्रघातिता। प्रयच्छ मां वडवाम्। कस्यार्थं वडवां ददामि। स कथयति। आगच्छादर्शमुखस्य राज्ञः सकाशं गच्छावः। सोऽस्माकं व्यवहारं गोपयिष्यति। ते तत्र संप्रस्थिताः।

स दण्डी निष्पलायितुमारब्धः। तेन प्राकारस्योपरिष्टादात्मा मुक्तः। तस्याधस्तात्कुविन्दो वस्त्रं सूयमानस्तस्योपरि

1 Tib. 376b. l. 1: སྔོན་ཁྲོང་གི་མཐའ། =ditch

पतितः। कुविन्दः प्रघातितः। दण्डी कुविन्दपत्न्या गृहीतः। त्वया मम स्वामी प्रघातितः। अनुप्रयच्छ मे स्वामिनम्। कुतोऽहं तव स्वामिनं ददामि। आगच्छादर्शमुखस्य राज्ञः सकाशं गच्छामः। सोऽस्माकं संशयं छेत्स्यते। ते संप्रस्थिताः।

अन्तर्मार्गे नदी गम्भीरा। तत्र तक्षाणो मुखेन वासीमादाय पारात्पारमागच्छति। स दण्डिना उच्यते। कियत्प्रभूतं पानीयम्। स वासीं मुक्त्वा कथयति। गम्भीरमुदकम्। वासी उदके निपतिता। तेन स दण्डी गृहीतः। त्वया मम वासी उदके परिहारिता। नाहं हारयिष्ये। आगच्छादर्शमुखस्य सकाशं गच्छामः। सोऽस्माकं संशयं छेत्स्यति।

ते श्रान्तकायाः कलपाल्यापणं दण्डिनमादाय प्रविष्टाः। तस्याः कलपाल्याः[1] पुत्रो जातः। स तया दारको वस्त्रेण प्रच्छाद्य शायापितकोऽभूत्। दण्डी तत्र निषण्णः। स कथयति। दारको दारक इति। यावत्पश्यति प्रघातितः। स तया दण्डी गृहीतः। त्वया मम पुत्रः प्रघातितः। अनुप्रयच्छ मे पुत्रम्। स कथयति। कुतोऽहं तव पुत्रं दास्ये। नाहं प्रघातयिष्ये। सा कथयति। आगच्छादर्शमुखस्य राज्ञः सकाशं गच्छामः। ते संप्रस्थिताः।

यावदन्यतमस्मिन्प्रदेशे शाखोटकवृक्षे वायसस्तिष्ठति। तेन दण्डी दृष्ट उक्तश्च। क्व यास्यसि। नाहं यास्ये। एते मां नयन्ति। कुत्र। आदर्शमुखस्य सकाशम्। मदीयमपि सन्देशं नय। वक्तव्यस्ते आदर्शमुखो राजा। अमुष्मिन् प्रदेशे शाखोटकवृक्षः।

1 Tib. 377b, l. 2: ཚང་འཚོང་མ།

तत्र वायसस्तिष्ठति । स कथयति । सन्त्यन्ये वृक्षा हरितस्निग्धपलाशाः। तत्राहं धृतिं न लभे। अत्र स्थितस्य मे स्वास्थ्यम्। को योगः। ते संप्रस्थिताः।

अद्राक्षीन्मृगो दण्डिनम् । स कथयति । दण्डिन् क्व गच्छसि । नाहं गच्छामि । एते मां नयन्ति आदर्शमुखसकाशम् । मदीयमपि संदेशं नय । सन्त्यन्येषु स्थानेषु हरितशाद्वलानि तृणानि । ते मम न रोचन्ते । किं कारणम् । ते संप्रस्थिताः।

यावत्तित्तिरेण दृष्ट उक्तश्च। क्व यास्यसि। पूर्ववत्। मदीयमपि सन्देशं नय। अहमेकस्मिन् प्रदेशे तित्तिरेति वाशितं करोमि। अपरस्मिन् उतित्तिरेति[1] । किमत्र कारणम्।

अपरस्मिन् प्रदेशे सर्पेण दृष्टः। पूर्ववन्ममापि सन्देशं नय। अहमाशयात्सुखेन निर्गच्छामि दुःखेन प्रविशामि। किमत्र कारणम्।

अन्यस्मिन् प्रदेशे अहिनकुलौ परस्परविरुद्धौ कलिं कुर्वतः। पूर्ववद्यावदस्माकमपि सन्देशं नय। आवां दिवान्योन्यं कलिं कुर्वाणौ धृतिं न लभावः। किमत्र कारणम्।

अन्यतमा वधूकुमारी[2] पूर्ववद्यावत्सा कथयति। ममापि सन्देशं नय। यदाहं पैतृके गृहे तिष्ठामि तदाहं श्वशुरगृहस्यार्थे उत्कण्ठामि। यदा श्वशुरगृहे तिष्ठामि तदा पैतृकगृहे उत्कण्ठामि। किमत्र कारणम्। ते संप्रस्थिताः।

1 Tib. 378a, l. 4: ཕྱོགས་གཞན་དུ་ནི་སྐད་གཞན་འབྱིན་པ །

2. 378b, l. 1: བག་མར་གཞོན་ནུ་མ །

जयेन येनादर्शमुखो राजा तेनोपसंक्रान्ताः। उपसंक्रम्य दण्डी राजानं जयेनायुषा चा वर्धयित्वा एकान्ते निषण्णः। तेऽप्यमी पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। राजा दण्डिनं पृच्छति। किमागतोऽसि। देवानीतोऽस्मीति। केन कारणेन। दण्डिना गृहपतिना सह विवादस्तत्सर्वमारोचितम्।

राजा गृहपतिं पृच्छति। दृष्टस्त्वया बलीवर्दः। दृष्टः। दण्डिन् त्वया बलीवर्दा प्रवेशिताः। देव प्रवेशिताः। राजा कथयति। अस्य दण्डिनो जिह्वां छिन्दत येन नारोचितम्। अस्यापि नेत्रोद्धरणं कुरुत येन बलीवर्दा नोपनिबद्धाः। गृहपतिः कथयति। एकदा मे बलीवर्दा हृता अपरं नेत्रोद्धरणं क्रियते। दण्डिना जितं भवतु।

स पुरुषः कथयति। देव अनेन दण्डिना मम वडवा प्रघातिता। यथाकथं तेन विस्तरेणारोचितम्। राजा कथयति। अस्य पुरुषस्य जिह्वां छिन्दत येनोक्तं यथा शक्नोषि तथा वारयेति। अस्यापि दण्डिनो हस्तौ अर्धापयत येनान्येन शक्यं तां धारयितुं नान्यत्र शिलाप्रहारया। स पुरुषः कथयति। एकदा मे वडवा प्रघातिता द्वितीयं ये जिह्वाच्छेदः। दण्डिना जितं भवतु।

कुविन्दपत्न्या विस्तरेणारोचितम्। राजा कथयति। गच्छ एष एव ते भर्ता भवतु। सा कथयति। एकदा अनेन मम भर्ता प्रघातितोऽपर एष मे स्वामी भविष्यति। दण्डिना जितं भवतु।

वर्धकिना विस्तरेणारोचितम्। राजा कथयति। अस्य तक्षाणस्य जिह्वां छिन्दत यो वासीं मुक्त्वोदकमध्ये वाचं निश्चारयति।

अस्यापि दण्डिनो नेत्रोद्धरणं कुरुत पश्यन्नपि गम्भीरमुदकं तक्षाणं पृच्छति। तक्षाणः कथयति। एकदा मे वास्यपहृता द्वितीयो मे जिह्वाच्छेदः। दण्डिना जितं भवतु।

कल्यपाल्या विस्तरेणारोचितम्। राजा कथयति। अस्याः कल्पपाल्या हस्तावधर्षयत यदनया दारकः सर्वेण सर्वं प्रच्छाद्य शाययितः। दण्डिनोऽपि नेत्रोद्धरणं कुरुत योऽप्रत्यवेक्ष्य परकीये आसने निषेत्स्यति। सा कथयति। एकदा मे पुत्रः प्रघातितो द्वितीयो मे हस्तच्छेदः। दण्डिना जितं भवतु।

दण्डिना [काक]सन्देशमारोचितम्। राजा कथयति। दंडिन् स काको वक्तव्यः। त्वमासीर्ग्रामराट्[1]। अत्र प्रदेशे शाखोटक आसीत। अस्मिंश्च शाखोटकवृक्षे निधानस्तिष्ठति। तं कस्यचिद्दत्त्वा गच्छ। स्वस्थो भविष्यसि।

मृगसन्देशमारोचितम्। स कथयति। मृगस्त्वया वक्तव्यः। अत्र वृक्षस्योपरिष्टान्मधुबिन्द्वा निपतंत्या तृणशाद्वलानि मधुरीकृतानि तानि त्वया भक्षितानि। स च मधु प्रक्रान्तः। रसगृध्यां त्यज। मानयेन व्यसनमापत्स्यसे इति।

तित्तिरिसन्देशमारोचितम्। राजा कथयति। यत्र स तित्तिरि तित्तिरि वाशितं करोति स प्रदेशो निष्कांचनः। यत्रोतित्तिरेति तत्र निधानस्तिष्ठति। स तं निधानं कस्यचिदारोचयित्वान्यत्र गच्छ। मानयेन व्यसनमापत्स्यसि।

1 Tib. 379b, l. 4: གྲོང་གི་བདག་པོར་གྱུར་ན། =ग्रामपतिः

अहिनकुलसन्देशमारोचितम्। राजा कथयति । तौ वक्तव्यौ । युवां मनुष्यभूतौ द्वौ भ्रातरौ। तत्रैकः कथयति स्वापतेयं भाजयावः। द्वितीयेन मात्सर्याभिभूतेन न भाजितम्। तत्रैकोऽध्यवसानं कृत्वा आशीविषेपूपपन्नः। द्वितीयोऽपि स्वापतेयमवष्टभ्याध्यवसानं कृत्वा नकुलः संवृत्तः। तेन यूयमेतत् स्वापतेयं श्रमणब्राह्मणेभ्यो दत्त्वा तस्मात् स्थानादपक्रमत। स्वस्था भविष्यथ।

सर्पस्य सन्देशमारोचितम्। राजा कथयति। वक्तव्यस्ते स सर्पः। त्वं जिघत्सादौर्बल्यपरीत आशयान्निर्गच्छसि। मुखेन प्रभूतमाहारं भुक्त्वा दुःखेनाशयं प्रविशसि। स त्वमाहारे मात्रां जानीयाः। यथेष्टचारी सुखं विहरिष्यसि।

वधूकुमार्याः सन्देशमारोचितम्। राजा कथयति। वक्तव्या वधूकुमारी त्वया। तव पैतृके गृहे सप्रेमकस्तिष्ठति। सा त्वं यदा श्वशुरगृहे तिष्ठसि तदा सप्रेमकस्यार्थे उत्कण्ठयसि। यदा पैतृकगृहे तिष्ठसि तदा स्वामिनोऽर्थे उत्कण्ठयसि। सा त्वमेकं स्थानं परित्यज्य एकं सुगृहीतं कुरु। मानयेन व्यसनमापत्स्यसे।

वधूकुमारी आशीविषश्च यथानुशिष्टः प्रतिपन्नः। अहिनकुलौ दण्डिनः स्वापतेयमनुप्रदत्तः। काकेनापि अवशिष्टा यथानुशिष्टाः प्रतिपन्नाः।

अमात्याः कथयन्ति। अहो देवस्य ईदृशोऽपि प्रतिभानः। राज्ञा आत्तमनसा चतुर्षु नगरद्वारेषु दानशाला मापिता। दानाधिष्ठायिकाः पुरुषाः स्थापिताः।

तेन खलु समयेन दुर्भिक्षमत्र द्वादशवार्षिकम्। तेन द्वादशवार्षिके दुर्भिक्षे वर्तमाने अनेकेषां प्राणिशतसहस्राणां पिण्डकेन योगोद्वहनं कृतम्। स आत्मनो यज्ञसम्पदं दृष्ट्वा गाथां भाषते।

धनं हि लब्ध्वा धर्मेण न कुर्यात्संचयं बुधः।
दद्यात्संपन्नशीलेषु दक्षिणीये[षु] दक्षिणाम्॥
श्रमणान्ब्राह्मणान्साधून् तर्पयित्वा वनीपकान्।
कायस्य भेदात्स तदा प्राज्ञो देवेषूपपद्यते॥
एवं ज्ञात्वा तु मेधावी श्राद्धो मुक्तेन चेतसा।
दानशूरान्प्रशंसन्ति दक्षिणीयेष्वमत्सराः॥

स्यात् खलु ते महाराजान्यः स तेन कालेन तेन समयेनादर्शमुखो नाम राजा प्राभाव्यः। येन तद्द्वादशवार्षिके दुर्भिक्षे वर्तमाने अनेकेषां प्राणिशतसहस्राणां पिण्डकेन योगोद्वहनं कृतम्। न खल्वेवं द्रष्टव्यम्। अपि त्वहमेव तेन कालेन तेन समयेनादर्शमुखो नाम राजाभूवं प्राभाव्यः। मयैव द्वादशवार्षिके दुर्भिक्षे वर्त्तमाने अनेकेषां प्राणिशतसहस्राणां पिण्डकेन योगोद्वहनं कृतम्। स्यात् खलु ते महाराज तेन मया दानेन वा दानसंविभागेन वानुत्तरा सम्यक्संबोधिरभिसंबुद्धेति। न खल्वेवं द्रष्टव्यम्। अपि तु मे तद्दानं हेतुमात्रकं प्रत्ययमात्रकं सम्भारमात्रकम्।

पुनरपि महाराज यन्मयानुत्तरां सम्यक्संबोधिं प्रार्थयिता दानानि दत्तानि पुण्यानि कृतानि तच्छ्रूयताम्। भूतपूर्वं महाराज सुधनो नाम राजाभूच्चक्रवर्ती। तेन चतुरशीतिषु नगरसहस्रेषु यज्ञवाटानि मापयित्वा बहूनि वर्षाणि बहूनि वर्षशतानि बहूनि

वर्षसहस्राणि बहूनि वर्षशतसहस्राणि दानानि दत्तानि पुण्यानि कृतानि। स आत्मनो यज्ञसम्पदं दृष्टा गाथां भाषते।

समृद्धिमात्मनो दृष्ट्वा देवेषु मनुजेषु च।
न प्रयच्छेद्धि को दानं संपत्तिर्येन लभ्यते॥
प्रत्यूह्य योऽयं शतानि पुंसां मात्सर्यमाक्रम्य सपत्नभूतम्।
ददाति दानं परलोकभीरुः शूरेष्वसौ शूरतरो मतो मे॥
न तं हि शूरं मुनयो वदन्ति यः शस्त्रपाणिर्विचरत्यनीके।
दानं प्रयच्छन्ति विशारदा ये शूरांस्तु तान्सर्वविदो वदन्ति[1]॥

स्यात् खलु ते महाराजान्यः स तेन कालेन तेन समयेन राजाभूच्चक्रवर्ती येन तच्चतुरशीतिषु नगरसहस्रेषु यज्ञवाटं मापयित्वा बहूनि वर्षाणि बहूनि वर्षशतानि बहूनि वर्षशत-सहस्राणि दानानि दत्तानि पुण्यानि कृतानि। न खल्वेवं द्रष्टव्यम्। अपि तु तद्दानं संबोधेर्हेतुमात्रकं प्रत्ययमात्रकं सम्भारमात्रकम्।

पुनरपि महाराज यन्मयानुत्तरां सम्यक्संबोधिं प्रार्थयिता दानानि दत्तानि पुण्यानि कृतानि वीर्यपारमिता च परिपूरिता न चानुत्तरा सम्यक् संबोधिरधिगतेति तच्छ्रूयताम्। भूतपूर्वं महाराज पंचालविषये द्वौ राजानौ बभूवतुः। उत्तरपंचालो दक्षिणपंचालश्च[2]।

तत्रोत्तरपंचालो धनो नाम्ना हस्तिनापुरे नगरे राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहु-

1 See above, p. 107.

2 Cf. *Divyā.*, p. 435f.

जनमनुष्यं च। प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नम्। धार्मिको धर्मराजा धर्मेण राज्यं कारयति। तस्मिंश्च नगरे महान् ह्रद उत्पलपद्मकुमुदपुण्डरीकसंछन्नो हंसकारण्डवचक्रवाकोपशोभितो रमणीयः। तत्र ह्रदे जन्मचित्रो नाम नागपोतः प्रतिवसति। स कालेन कालं सम्यग्वारिधारामनुप्रयच्छतीति अतीव शस्यसंपत्तिर्भवति। शस्यवती वसुमती सुभिक्षान्नपानो देशः। दानमानसत्कारवांश्च लोकः श्रमणब्राह्मणकृपणवनीपकोपभोज्यः।

दक्षिणपंचालस्तु राजा अधर्मभूयिष्ठश्चण्डो रभसः कर्कशः अधर्मेण राज्यं कारयति। नित्यं दण्डनताडनघातनधारणबन्धनहडिनिगडोपरोधैः[1] राष्ट्रनिवासिनं त्रासयति। अधर्मभूयिष्ठतया चास्य देवो न कालेन कालं सम्यग्वारिधारामनुप्रयच्छति। ततोऽसौ जनकायः संत्रस्तः संवेगमापन्नः स्वजीवितापेक्षया राष्ट्रपरित्यागं कृत्वोत्तरपंचालस्य राज्ञो विषयं गत्वा प्रतिवसति। यावदपरेण समयेन दक्षिणपंचालो राजा मृगयाव्यपदेशेन जनपदान्व्यवलोकनाय निर्गतो यावत्पश्यति ग्रामनगराणि शून्यानि उद्यानदेवकुलानि भिन्नप्रभग्नानि[2]। दृष्ट्वा च पुनरमात्यानामन्त्रयते। कस्माद्भवन्त इमानि ग्रामनगराणि शून्यानि उद्यानदेवकुलानि च भिन्नप्रभग्नानि। स जनकायः क्व गत इति। अमात्याः कथयन्ति। देव उत्तर-

1 Cf. *Divyā.*, p. 435, l. 17; Tib. 383a, l. 1: འཆིང་བ་དང ། སྨུ་མི་འདོད་དང ། ཁོང་སྒྲིལ་རྣང །

2 *Ibid.*, l. 6: ཞིག་རལ་དུ་གྱུར་པ །

पंचालस्य राज्ञो धनस्य विषयं गताः। किमर्थम्। देवाभयं प्रयच्छ कथयामः। दत्तं भवतु। ततस्ते कथयन्ति। देव उत्तर-पंचालो राजा धर्मेण राज्यं कारयति। तस्य जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्चाकीर्णबहुजनमनुष्याश्च प्रशान्त-कलिकलहडिम्बडमरास्तस्कररोगापगताः। शालीक्षुगोमहिषीसंपन्नो दानमानसत्कारवांश्च लोकः। श्रमणब्राह्मणकृपणवनीपकोपभोज्यः। देवस्तु चंडो रभसः कर्कशो नित्यं दंडनताडनघातनधारणबंधन-हडिनिगडोपरोधैः राष्ट्रं त्रासयति यतोऽसौ जनकायः संत्रस्तः संवेगमापन्नः उत्तरपंचालस्य राज्ञो विषयं गतः। दक्षिणपंचालो राजा कथयति। भवन्तः कोऽसावुपायः स्याद् येनासौ जनकायः पुनरागत्यैषु ग्रामनगरेषु प्रतिवसेत्। अमात्याः कथयन्ति। यदि देवः उत्तरपंचालराजवद्धर्मेण राज्यं कारयति मैत्रचित्तो हित-चित्तोऽनुकंपाचित्तः स्वराष्ट्रं पालयति नचिरादसौ जनकायः पुनरागत्यैषु ग्रामनगरेषु प्रतिवसेत्। दक्षिणपंचालो राजा कथयति। भवन्तो यद्येवमहमप्युत्तरपंचालवद्धर्मेण राज्यं कार-यामि मैत्रचित्तो हितचित्तोऽनुकम्पाचित्तश्च राष्ट्रं परिपालयामि। यूयं तथा कुरुत यथासौ जनकायः पुनरागत्यैषु ग्रामनगरेषु प्रतिवसतीति। देवापरोऽपि तत्रानुशंसोऽस्ति। तस्मिन्नगरे महान् ह्रदः उत्पलकुमुदपुण्डरीकसंछन्नो हंसकारंडवचक्रवाकोपशोभितः। तत्र जन्मचित्रो नागपोतः प्रतिवसति। स कालेन कालं सम्यग्वा-रिधारामनुप्रयच्छति। अतीव शस्यसंपत्तिर्भवति। तेन तत्र शस्य-वती वसुमती सुभिक्षान्नपानश्च देशः। कोऽसावुपायः स्याद् येनासौ

नागपोत इहानीयेत। देव विद्यामंत्रधारिणस्तमानयन्ति। ते समन्विष्यन्ताम्। ततो राज्ञा सुवर्णपिटकं ध्वजाग्रे बद्ध्वा सर्वविजिते घंटावघोषणं कारितम्। य उत्तरपंचालविषयाज्जन्मचित्रं नागपोतमानयेत् तस्येमं सुवर्णपिटकं दास्यामि महता च सत्कारेण सत्करिष्यामीति। यावदन्यतम आहितुंडिकः अमात्यानां सकाशं गत्वा कथयति। ममैतत्सुवर्णपिटकमनुप्रयच्छत अहं जन्मचित्रं नागपोतमपहृत्यानयामीति। अमात्याः कथयन्ति। एष गृहाण। स कथयति। यो युष्माकं श्रद्धितः प्रत्ययितश्च तस्य हस्ते तिष्ठतु। आनीते जन्मचित्रे नागपोते ग्रहीष्यामीति। एवं कुरुष्वेति। ततोऽसावाहितुंडिकः प्रत्ययितस्य पुरुषस्य हस्ते सुवर्णपिटकं स्थापयित्वा हस्तिनापुरं नगरं गतः। ततस्तेनासौ ह्रदः समन्ततो व्यवलोकितः। निमित्तीकृतं चासौ जन्मचित्रो नागपोत एतस्मिन् देशे प्रतिष्ठतीति। ततो बल्युपहारनिमित्तं [ततः] पुनः प्रत्यागतः। अमात्यानां कथयति बल्युपहारं मे प्रयच्छत सप्तमे दिवसे तं नागपोतमपहृत्यानयामीति। स चाहितुंडिकस्तेन संलक्षितो ममासावपहरणायागतः। सप्तमे दिवसे मामपहरिष्यति। मातापितृवियोगजं महद्दुःखं भविष्यति। किं करोमि कं शरणं प्रपद्ये इति। तस्य च ह्रदस्य नातिदूरे द्वौ लुब्धकौ प्रतिवसतः सारकः फलकश्च। तौ तं ह्रदमाश्रित्य जीविकां कल्पयतः। यः स्थलगतः प्राणिनो मृगशशशरभसूकरादयस्तद् ह्रदमुपसर्पन्ति तान्प्रघातयति येऽपि जलगता मत्स्यकच्छपमण्डूकादयः[1]। तत्र च सारकः कालगतः।

1 Tib. 385a, l. 7f.

फलको जीवति। जन्मचित्रो नागपोतः संलक्षयति। नान्योऽस्ति मम शरणमृते फलकाल्लुब्धकात्। ततो मनुष्यवेशमास्थाय फलकस्य सकाशं गतः। गत्वा कथयति। भोः पुरुष किं त्वं जानीषे कस्यानुभावाद्धनस्य राज्ञो जनपदा ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्चाकीर्णबहुजनमनुष्याश्च पूर्ववद्यावच्छालीक्षुगोमहिषीसंपन्ना इति। स कथयति। जाने। स राजा धार्मिको धर्मेण राज्यं कारयति मैत्रचित्तो हितचित्तोऽनुकम्पाचित्तश्च राष्ट्रं पालयतीति। स कथयति। किमेतदेवास्ति। अन्यदपीति। लुब्धकः कथयति। अस्त्यन्योऽप्यनुशंसः। यः अस्मिन् ह्रदे जन्मचित्रो नाम नागपोतः प्रतिवसति स कालेन कालं सम्यग्वारिधारामनुप्रयच्छति। अतीव शस्यसंपत्तिर्भवति शस्यवती वसुमती सुभिक्षान्नपानश्च [देशः] इति। जन्मचित्रः कथयति। यदि कश्चित्तं नागपोतमितो विषयादपहरेत्तस्य नागपोतस्य किं स्यात् मातापितृवियोगजमस्य दुःखं स्याद्राज्ञो राष्ट्रस्य च। योऽपहरति तस्य त्वं किं कुर्याः। जीविताद्व्यवरोपयेयम्। जानीषे त्वं कतरोऽसौ नागपोत इति। न जाने। अहमसौ दक्षिणपंचालविषयिकेनापह्रियेे[1]। स बल्युपहारविधानार्थं गतः सप्तमे दिवसे आगमिष्यति। आगत्यास्य ह्रदस्य चतसृषु दिक्षु खदिरकीलकान्निखन्य[2] नानारंगैः सूत्रैर्वेष्टयित्वा मन्त्रानावर्तयिष्यति। तत्र त्वया प्रच्छन्नं संनिकृष्टे स्थाने स्थातव्यम्। यदा तेनायमेवंरूपः

1 Cf. *Divyā.*, p. 438: दक्षिणपाञ्चाल वैषयिकेनाहितुण्डिकेनापहृत्य नीयेत।

2 Ibid: खदिरशलाकान्

प्रयोगः कृतो भवति तदा ह्रदमध्यात्क्वथमानं पानीयमुत्थास्यति। अहं चोत्थास्यामि। तदा त्वयासावाहितुंडिकः शरेण मर्मणि ताडयितव्यः। आशु चोपसंक्रम्य वक्तव्यो मंत्रानुपसंहर। मा ते उत्कृत्तमूलं शिरः कृत्वा पृथिव्यां निपातयिष्यामीति। यद्यसौ मन्त्राननुपसंहृत्य प्राणै-र्वियोक्ष्यते मृतेऽहं[1] यावज्जीवमेव मन्त्रपाशबद्धः स्यामिति। लुब्धकः प्राह। यदि तवैकस्यैवं गुणः स्यात्तथाप्यहमेवं कुर्यां प्रागेव सकलस्य राष्ट्रस्य। गच्छाम्यहं तत्र स्थान इति। ततस्तेन नागपोतेन तस्यैक-पार्श्वे गुप्तं स्थानमुपदर्शितम्। यावदसौ लुब्धकः सप्तमे दिवसे प्रति-गुप्ते प्रदेशे आत्मानं गोपयित्वावस्थितः। स चाहितुंडिक आगत्य बल्युपहारं कर्तुमारब्धः। तेन चतसृषु दिक्षु चत्वारः खदिरकीलकाः निखाताः। नानारंगैः सूत्रकैर्वेष्टयित्वा मन्त्रैरावर्तितः। ततस्तत्-पानीयमुत्क्वथितुमारब्धम्। लुब्धकेन शरेण मर्मणि ताडितो निष्कोशं चासिं कृत्वाभिहितः। त्वमस्मिन्विषयनिवासिनं नागपोतकं मन्त्रेणाप-हरसि। मंत्रानुपसंहर। मा ते उत्कृत्तमूलं शिरः कृत्वा पृथिव्यां निपातयिष्यामीति। तत अहितुंडिकेन दुःखवेदनाभिभूतेन मन्त्रा व्यावर्तिताः। तेन च समनन्तरं लुब्धकेन जीविताद् व्यवरोपितः। ततो नागपोतो मन्त्रपाशबन्धनाद्विनिर्मुक्तो ह्रदादभ्युद्गत्य तं लुब्धकं परिष्वक्तवानेवं चाह। त्वं मे माता त्वं पिता यन्मम त्वमा-गम्य मातापितृवियोगजं दुःखं नोत्पन्नम्। आगच्छ भुवनं गच्छावः। तेनासौ स्वभुवनं नीतो नानाविधेन चान्नपानेन संतर्पितो रत्नानि चोपदर्शितानि। मातापित्रोश्च निवेदितम्। अम्ब तात एष मे सुहृ-

1 Cf. *Divyā*.. p. 438: मृतं तेऽहम्।

च्छरण्यं बान्धवोऽस्यानुभावान्मम युष्माभिः सह वियोगो न जात इति। ताभ्यामप्यसौ वरेण प्रवारितो विविधानि रत्नानि दत्तानि। स तान्यादाय तस्माद् ह्रदाद् व्युत्थितः।

तस्य ह्रदस्य नातिदूरे पुष्पफलसम्पन्नं नानाशकुनिभिर्निकूजितमाश्रमपदम्[1]। तत्र ऋषिः प्रतिवसति मैत्र्यात्मकः कारुणिकः सत्त्ववत्सलः। ततोऽसौ लुब्धकस्तस्य ऋषेस्त्रिष्कालमुपसंक्रमितुमारब्धः। यच्चास्य जन्मचित्रेण नागपोतेन सार्धं वृत्तं तत्सर्वं विस्तरेण समाख्यातम्। ततोऽसावृषिः कथयति। किं रत्नैः किं वा ते सुवर्णेन तस्य भुवने अमोघो नाम पाशस्तिष्ठति तं याचस्वेति। ततो लुब्धकोऽमोघपाशे जाततृष्णः ऋषिवचनमुपश्रुत्य पुनरपि नागभुवनं गतो यावत्पश्यति नागभुवनद्वारे तममोघं पाशम्। तस्यैतदभवत्। एष स पाशो यो मया प्रार्थनीय इति विदित्वा नागभुवनं प्रविष्टः। ततो जन्मचित्रेण नागपोतेनान्यैश्च नागपोतैः ससंभ्रमं प्रतिसंमोदितो रत्नैश्च प्रवारितः कथयति। अलं मे रत्नैः किं त्वेतदमोघं पाशं ममानुप्रयच्छेति। जन्मचित्रः कथयति। तवानेन किं प्रयोजनम्। अस्माकं तु महत्प्रयोजनम्। यदा गरुडभयोपद्रुता भवामस्तदानेनात्मानं रक्षामः। लुब्धकः कथयति। युष्माकमेष गरुडभयोपद्रुतानामुपयोगं गच्छति मम त्वनेन सततमेव प्रयोजनम्। यद्यस्ति कृतमुपकृतं वा प्रयच्छेति। जन्मचित्रस्य नागपोतस्यैतदभवत्। ममानेन बहूपकृतं मातापितरावलोक्य ददामीति। तेन माता-

1 Cf. *Divyā*,. p. 439 which omits a few lines here.

पितरावलोक्य स पाशो दत्तः। ततोऽसौ लुब्धकः पृथिवीलब्ध-प्रख्येन सुखसौमनस्येनाप्यायितमना अमोघं पाशमादाय नाग-भुवनादभ्युद्गम्य स्वगृहं गतः।

यावदपरेण समयेन धनो राजा देव्या सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतो न पुत्रो न दुहिता। स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। अनेकधनसमुदितं मे गृहं न मे पुत्रो न दुहिता। ममात्ययात् स्वकुलवंशच्छेदे राष्ट्रापहारः। सर्वं च स्वापतेयमपुत्रकमिति कृत्वा राजविधेयं भविष्यतीति। स श्रमणब्राह्मणसुहृत्सम्बन्धि-बान्धवैरुच्यते। देव किमसि चिन्तापर इति। स एतत्प्रकरणं तेषां विस्तरेणारोचयति। ते कथयन्ति। देवताराधनं कुरु पुत्र-स्ते भविष्यतीति। सोऽपुत्रः पुत्राभिनन्दी शिववरुणकुवेरशक्र-ब्रह्मादीनन्यांश्च देवताविशेषानायाचते तद्यथा आरामदेवता वन-देवताश्चत्वरदेवताः शृङ्गाटकदेवता बलिप्रतिग्राहिका देवताः सहजाः सहधर्मिका नित्यानुबद्धा अपि देवता आयाचते। अस्ति चैष लोके प्रवादो यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्च। तच्च नैवम्। यद्येवमभविष्यत् एकैकस्य पुत्रसहस्रमभविष्यत् तद्यथा राज्ञश्चक्रवर्तिनः। अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। कतमेषां त्रयाणाम्। मातापितरौ रक्तौ भवतः। सन्निपतितौ। माता च कल्या भवति ऋतुमती। गन्धर्वश्च प्रत्यु-पस्थितो भवति। एषां त्रयाणां स्थानानां सम्मुखीभावात्पुत्रा जायन्ते दुहितरश्च। स चैवमायाचनपरस्तिष्ठति। अन्यतमश्च भद्रकल्पिको

बोधिसत्त्वस्तस्या अग्रमहिष्याः कुक्षिमवक्रान्तः। पञ्चावेणिका धर्माः एकतः पण्डितजातीये मातृग्रामे। कतमे पञ्च। रक्तं पुरुषं जानाति। कालं जानाति। ऋतुं जानाति। गर्भमवक्रान्तं जानाति। यस्य सकाशाद् गर्भोऽवक्रामति तं जानाति। दारकं जानाति। दारिकां जानाति। स चेद्दारको भवति दक्षिणं कुक्षिं निश्रित्य तिष्ठति। सा चेद्दारिका भवति वामं कुक्षिं निश्रित्य तिष्ठति। सा आत्तमनात्तमनाः स्वामिनमारोचयति। दिष्ट्या आर्यपुत्र वर्धसे। आपन्नसत्त्वास्मि संवृत्ता। यथा च मे दक्षिणकुक्षिं निश्रित्य तिष्ठति नियतं दारको भविष्यतीति। सोऽप्यात्तमनात्तमनाः पूर्वं कायमभ्युन्नमय्य दक्षिणबाहुमभिप्रसार्योदानमुदानयति।

अप्येवाहं चिरकालाभिलषितं पुत्रमुखं पश्येयम्। [सम]जातो मे स्यान्नावजातः[1]। कृत्यानि मे कुर्वीत। भृतः प्रतिबिभृयात्। दायाद्यं प्रतिपद्येत। कुलवंशो मे चिरस्थितिकः स्यात्। अस्माकं चाप्यतीतकालगतानामल्पं वा प्रभूतं वा दानानि दत्त्वा पुण्यानि कृत्वा [अस्माकं नाम्ना] दक्षिणामादेक्ष्यते। इदं तयोर्यत्र तत्रोपपन्नयोर्गच्छतोरनुगच्छत्विति[2]।

आपन्नसत्त्वां चैनां विदित्वा उपरि प्रासादतलगतामयन्त्रितां धारयति शीते शीतोपकरणैरुष्णे उष्णोपकरणैर्वैद्यप्रज्ञप्तै-

1 Tib. 389a, l. 7: ཁོ་བོ་དང་འཐུན་པར་སྐྱེ་ཞིང་མི་མཐུན་པར་མི་སྐྱེ་བ་དང་།

2 Tib. 389b, l, 2: བསོད་ནམས་དག་བྱས་ནས་འདི་དེ་གཉིས་གང་དུ་སྐྱེས་པ་དེར་འགྲོ་ཞིང་རྗེས་སུ་འགྲོ་བར་གྱུར་ཅིག་ཅེས་མིང་གིས་ཡོན་བསྔོ་བ་བྱེད་པར་གྱུར་ཅིག་ཅེས་ཆེད་དུ་བརྗོད་པ་བརྗོད་པར་བྱེད་དོ།

राहारैर्नातितिक्तैर्नात्यम्लैर्नातिलवणैर्नातिमधुरकैर्नातिकटुकैर्नातिकषायैस्तिक्ताम्ललवणमधुरकटुककषायविवर्जितैराहारैर्हारार्धहारविभूषितगात्रीमप्सरसमिव नन्दनवनविहारिणीं मञ्चात्मञ्चं पीठात् पीठमवतरन्तीमधरिमां भूमिम्। न चास्याः किञ्चिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय। सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारको जातः। अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाटः उच्चघोषः संगतभ्रूस्तुङ्गनासः सर्वाङ्गप्रत्यङ्गोपेतः। तस्य जातावानन्दभेर्यस्ताडिताः। श्रुत्वा राजा कथयति। किमेतदिति। अन्तःपुरिकाभिः राज्ञे निवेदितम्। देव दिष्ट्या वर्धसे पुत्रस्ते जात इति। ततो राज्ञा सर्वं तन्नगरमपगतपाषाणशर्करकठल्लं व्यवस्थापितम्। चन्दनवारिपरिषिक्तमुच्छ्रितध्वजपताकं सुरभिधूपघटिकोपनिबद्धं नानापुष्पावकीर्णं रमणीयम्। आज्ञा च दत्ता। श्रमणब्राह्मणकृपणवनीपकेभ्यो दानं प्रयच्छत। सर्वबन्धनमोक्षं कुरुतेति। तस्यैवं त्रीणि सप्तकान्येकविंशतिदिवसान् विस्तरेण जातस्य जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते। किं भवतु दारकस्य नामेति। अमात्याः कथयन्ति। अयं दारको धनस्य राज्ञः पुत्रः। भवतु दारकस्य सुधन इति नामेति। तस्य सुधन इति नामधेयं व्यवस्थापितम्। सुधनो दारकः अष्टाभ्यो धात्रीभ्योऽनुप्रदत्तः। द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सोऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा

सर्पिर्मण्डेनान्यैश्चोत्तप्तैरुपकरणविशेषैः। आशु वर्धते ह्रदस्थमिव पङ्कजम्। स यदा महान् संवृत्तस्तदा लिप्यामुपन्यस्तः[1]। पूर्ववद्यावदष्टासु परीक्षासूद्घाटको वाचकः पण्डितः पटुप्रचारः संवृत्तः। स यानि तानि भवन्ति मूर्धाभिषिक्तानां जनपदैश्वर्यस्थामवीर्यमनुप्राप्तानां महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यावसतां[2] पूर्ववद्यावत् पंचसु स्थानेषु कृतावी संवृत्तः। तस्य पित्रा त्रीण्यन्तःपुराणि व्यवस्थापितानि ज्येष्ठं मध्यं कनीयः। त्रीणि वासगृहाणि मापितानि हैमन्तिकं ग्रैष्मिकं वार्षिकम्। त्रीण्युद्यानानि मापितानि हैमन्तिकं ग्रैष्मिकं वार्षिकम्। ततः सुधनः कुमारः उपरि प्रासादतलगतो निष्पुरुषेण तूर्येण क्रीडति रमते परिचारयति।

यावदपरेण समयेन फलको लुब्धको मृगानन्वेषमाणस्तेन तेनानुविचरन्नन्यतमं पर्वतमनुप्राप्तः। तस्य च पर्वतस्याधस्तादृषेराश्रमपदं पश्यति पुष्पफलसंपन्नं नानापक्षिगणविचरितम्। महान्तं च ह्रदमुत्पलकुमुदपुण्डरीकसंछन्नं हंसकारण्डव-

1 Tib. 391a, l. 2; *Divyā.* p. 441-2 enumerates the subjects thus: लिप्यामुपन्यस्तः संख्यायां गणनायां मुद्रायामुद्धारे न्यासे निक्षेपे वस्तुपरीक्षायां कुमारपरीक्षायां कुमारिकापरीक्षायां दारुपरीक्षायां रत्नपरीक्षायां वस्त्रपरीक्षायाम्।

2 Cf. *Divyā.* p. 442: यानि तानि भवन्ति राज्ञां क्षत्रियाणां मूर्द्धाभिषिक्तानां जनपदैश्वर्यानुप्राप्तानां महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यावसतां पृथग् भवन्ति शिल्पस्थानकर्मस्थानानि तद् यथा हस्तिग्रीवायामश्वपृष्ठे रथे त्सरौ धनुष्यपयाने निर्याणे अङ्कुशग्रहे छेद्ये भेद्ये मुष्टिबन्धे शिखाबन्धे पदबन्धे दूरवेधे शब्दवेधे मर्मवेधे अक्षुण्णवेधे दृढप्रहारितायां पञ्चस्थानेषु कृतावी संवृत्तः।

चक्रवाकोपशोभितम्। तदाश्रमपदं परिभ्रमितुमारब्धः। यावत्त-मृषिं पश्यति दीर्घकेशश्मश्रुनखरोमाणं वातातपकर्षितशरीरं चीवरवल्कलधारिणमन्यतमद्वृक्षमूलाश्रयं तृणकुटिकाकृतनिलयम्। दृष्ट्वा च पुनः पादाभिवन्दनं कृत्वा कृतांजलिपुटः पप्रच्छ। भगवन् कियच्चिरमस्मिन्प्रदेशे तव प्रतिवसतः। चत्वारिंशद्वर्षाणि। अस्ति त्वया इयता कालेनास्मिन्प्रदेशे कश्चिदाश्चर्याद्भुतो धर्मो दृष्टः श्रुतो वा कस्यचित्सकाशात्। स ऋषिर्मन्दमन्दमुवाच। भद्रमुख दृष्टस्ते अयं ह्रदः। दृष्टो भगवन्। एषा ब्रह्मसभा नाम पुष्करि[णी उत्पलपद्मकुमुदपु]डरीकसंछन्ना नानापक्षिगणनिषे-विता हिमरजततुषारगौराम्बुपूर्णा सुरभिकुसुमपरिवासिततोया। अस्यां पुष्करिण्यां पंचदश्यां पंचदश्यां मनोहरा नाम द्रुम-किन्नरराजस्य दुहि[ता पंचकिन्नरीशतपरिवृता नाना]विध-शिरःस्नानोद्वर्तनैरागत्य स्नाति। स्नानकाले चास्य मधुरनृत्य-गीतवादितशब्देन मृगपक्षिणोऽपह्रियन्ते। अहमपि तं शब्दं श्रुत्वा महता प्रीतिसौमनस्येन सप्ताहमधिनामयामि। एतदाश्चर्यं भद्रमुख मया दृष्टमिति।

अथ फलकस्य लुब्धकस्यैतदभवत्। शोभनो मया अमोघः पाशो नागाल्लब्धः। तं मनोहराया किन्नर्याः क्षेप्स्यामीति। सोऽपरेण समयेन पूर्णपंचदश्यां पाशमादाय ह्रदतीर्थसमीपे पुष्पफलविटपवृक्षगहनमाश्रित्यावधानतत्परोऽवस्थितः। यावन्मनो-हरा किन्नरी पंचकिन्नरीशतपरिवृता महत्या विभूत्या ब्रह्म-सभां पुष्करिणीमवतीर्णा स्नातुं तत्समनन्तरं च फलकेन

लुब्धकेनामोघः पाशः क्षिप्तो येन मनोहरा किन्नरी बद्धा। तया अमोघपाशपाशितया ह्रदे महानुपमर्दः कृतो[1] विभीषणश्च शब्दो निश्चारितः। यं श्रुत्वा परिशिष्टः किन्नरीगणः इतश्चामुतश्च संभ्रान्तो म[नो]हरां किन्नरीं निरीक्षितुमारब्धः। पश्यति बद्धाम्। दृष्ट्वा च पुनर्भीतो निष्पलायितः। अद्राक्षीत्स लुब्धकस्तां परमरूपदर्शनीयाम्। दृष्ट्वा च पुनरुपश्लिष्टो ग्रहीष्यामीति। सा कथयति।

मा नैषीस्त्वं हि मा स्प्राक्षीर्नैतत्तव सुचेष्टितम्।
राजभोग्या सुरूपाहं न साधु ग्रहणं तव॥ इति।

लुब्धकः प्राह। यदि त्वां न गृह्णामि निष्पलायसे। सा कथयति। नाहं निष्पलाये। यदि न श्रद्दधासि अयं चूडामणिं गृह्ण। अस्यानुभावेनाहमुपरि विहायसा गच्छामीति। लुब्धकः कथयति। कथं जाने। तया शिरस्तश्चूडामणिर्दत्तः उक्तश्च। एतच्चूडामणिर्यस्य हस्तस्थस्तस्याहं वशा भवामि। ततो लुब्धकेनासौ मणिर्गृहीतः। पाशबद्धां चैनां गृहीत्वा संप्रस्थितः।

तेन खलु समयेन सुधनः कुमारो मृगयानिर्गतः। अद्राक्षीत्स लुब्धकः सुधनं कुमारमभिरूपं दर्शनीयं प्रासादिकम्। दृष्ट्वा च पुनरस्यैतदभवत्। अयं च राजकुमार इयं च परमरूपदर्शनीया। यद्येतां द्रक्ष्यति बलाद् गृहीष्यतीति। यत्त्वहमेतां प्राभृतन्यायेन[2] स्वयमेवोपनयेयम्। ततस्तं पाशमादाय येन सुधनो राजकुमारस्तेनोपसंक्रान्तः। उपसंक्रम्य पादयोर्निपत्य कथयति। इदं मया

1 *Divyā*, p. 443 महाहतमन्दः। Tib. 392a, l. 4: མཆོང་གྲལ་ཞིང |

2 Tib. 392b, l. 5: སྐྱེས་ཀོར་ཚལ་ང ।

देवस्य स्त्रीरत्नं प्राभृतमानीतं प्रतिगृह्यतामिति । अद्राक्षीत्सुधनो राजकुमारीं मनोहरां किन्नरीमभिरूपां दर्शनीयां प्रासादिकां परमया वर्णपुष्कलतया समन्वागतां सर्वगुणसमुदितामष्टादशभिः स्त्रीलक्षणैः समलंकृतां जनपदकल्याणीं कांचनकलशकूर्मपीनोन्नत-कठिनसंहतसुजातवृत्तप्रगलमानस्तनीम[1]भिनीलरक्तांशुकविस्तृतायत-नवकमलसदृशनयनां सुभ्रुवमायततुंगनासां विद्रुममणिरत्नबिम्ब-फलसंस्थान-सदृशाधरोष्ठीमादृढपरिपूर्णगंडपार्श्वामत्यर्थरतिकरवि-शेषकरकपोलतिलकामनुपूर्वरचितसंहतभ्रुवमरविन्दविकचसदृश-परिपूर्णविमलशशिवपुषीं प्रलम्बबाहुं गम्भीरत्रिवलीकसन्नतमध्यां[2]-स्तनभारावनाम्यमानपूर्वार्धं रथांगसंस्थितसुजातजघनां कदली-गर्भसदृशकरां पूर्वानुवर्तितसंहतसुजातकरभोरुं सुनिगूढसुरचित-सर्वांगसुन्दरसिरां [3]संहितमणिचूडामारक्तकरतलां प्रहर्षनूपुरवलय-हारार्धहारनिर्घोषविलसितगतिमायतनीलसूक्ष्मकेशीं शचीमिव भ्रष्टकांचीं नूपुरावच्छादितपादां छातोदरीं[4] तां प्रकीर्णहारा-मुक्तसजाम्बूनदचारुवर्णां[5] दृष्ट्वा कुमारः सहसा पपात बद्धो दृ

1 Tib. 393a, l. 1-2: ནུ་མ་གསེར་གྱི་བུམ་དང་བ། རུ་སྦལ་ལྟར་རྒྱས་ཤིང་སྲོ་བ་དང་མཁྲང་མཁྲེགས་པས་ཤིན་ཏུ་ལེགས་པར་བླུམ་པ་ལྡེམ་པ།

2 Tib. 393a, l. 4-5: ལྟོ་གཉེར་མ་ཟབ་མོ་གསུམ་དང་ལྡན་ཞིང་ཡིད་ཙམ་རྙོང་བ།

3 Tib. 393a, l. 6: ནོར་བུ་མང་པའི་མགོ་རྒྱན་དང་།

4 Tib. 393b, l. 1: ལྟོ་ཕྱུང་ངེ་བ།

5 Tib. 393b, l. 1: མདོག་གསེར་བཙོ་མ་ལྟར་བཟང་བ་མཐོང་།

रागपाशेन। तत्र स रागवह्नौ दहनपतंगसदृशेन जलचञ्चल-चन्द्रविमलोज्ज्वलस्वभावेन दुर्ग्राह्यतरेण नदीतरङ्गझषमकर-दुरधिगमेन गरुडपवनजवसमगतिना तुलपरिवर्तनलघुवानराव-स्थितचपलोद्भ्रान्ततरेण सतताभ्यासक्लेशनिषेवणरागसुखास्वाद-लोलेन सर्वक्लेशविषमदुर्गप्रपातनिःसंगेन परमलीनेन चित्तेन सद्भूतानुरागतया अयोनिशोमनस्कारधनुर्विसृतेन संयोगाभि-लषितपरमरहस्यशब्देन कामशरेण हृदये विद्धः आह च।

दृष्टाथ तां स सुधन इन्दुसमानवक्त्रां
प्रावृड्घनान्तरविनिश्चरतीव विद्युत्।
तत्स्नेहमन्मथविलाससमुद्भवेन
सद्यः स चेतसि तु रागशरेण विद्धः[1] ॥

स तामतिमनोहरां मनोहरां गृहीत्वा हस्तिनापुरं गतः। स च लुब्धको ग्रामवरेणाच्छादितः। ततः सुधनः कुमारो मनोहरया सार्धमुपरि प्रासादतलगतः क्रीडति रमते परिचारयति। मनो-हरया रूपयौवनगुणेन सुधनः कुमारोऽनेकैश्चोपचारशतैस्तथापहृतो यथा सुधनः कुमारो मुहूर्तमपि तां न जहाति।

यावदपरेण समयेन जनपदाद्[2] द्वौ ब्राह्मणावभ्यागतौ। तत्रैको राजानं संश्रितो द्वितीयः सुधनं कुमारम्। यो राजानं संश्रितः स राज्ञा पुरोहितः स्थापितो भोगैश्च संविभक्तः। यस्तु सुधनं कुमारं स भोगमात्रेण संविभक्तः।

1 Tib, 393b, l. 7 marks here: འདུལ་བ་གཞི་བམ་པོ་ཞི་བླ་པ།

2 *Divyā.*, p, 445: जेतवनाद्।

[स] कथयति। कुमार यदा त्वं पितुरत्ययाद्राज्ये प्रतिष्ठास्यसि तदा मे किं करिष्यसीति। सुधनः कुमारः कथयति। यथा तव सहायो ब्राह्मणो मम पिता पौरोहित्ये स्थापितः एवमहं त्वामपि पौरोहित्ये स्थापयामीति। एष च वृत्तान्तस्तेन ब्राह्मणेन कणपरंपरया श्रुतः। तस्यैतदभवत्। अहं तथा करिष्यामि यथा कुमारो राज्यमेव नासादयिष्यति। कुतस्तं पुरोहितं स्थापयिष्यतीति।

यावदपरेण समयेन तस्य राज्ञो विजिते अन्यतमः कार्वटिको विरुद्धः[1]। तस्य समुच्छित्तये राज्ञा एको दण्डः प्रेषितः। स हतविहतविध्वस्तः प्रत्यागतः। एवं यावत्सप्त दंडाः प्रेषिताः। तेऽपि हत[विहतविध्वस्ताः] प्रत्यागताः। अमात्यैः राजा विज्ञप्तः। देव किमर्थं स्वबलं हाप्यते परबलं वर्ध्यते। यावत्कश्चिद्देवविजिते शस्त्रबलोपजीवी सर्वोऽसावाहूयतामिति। ब्राह्मणः पुरोहितः संलक्षयति। अयं कुमारस्य वधोपायकाल इति। तेन राजा विज्ञप्तः। देव नैवमसौ शक्यः सन्नामयितुम्। राजा कथयति। किं मया स्वयं गन्तव्यम्। पुरोहितः कथयति। किमर्थं देवः स्वयं गच्छति। अयं सुधनः कुमारो बलदर्पयुक्तः। एष दण्डसहीयः प्रेष्यतामिति। राजा कथयति। एवमस्त्विति। ततो राजा कुमारमाहूय कथयति। गच्छ कुमार दंडसहीयः कार्वटिकं सन्नामय। एवं देवेति सुधनः कुमारो राज्ञः प्रतिश्रुत्यान्तःपुरं प्रविष्टः। मनोहरादर्शनाच्चास्य सर्वं विस्मृतम्। पुनरपि राज्ञाभिहितः। पुनरपि तद्दर्शनात्सर्वं विस्मृतम्। ततः पुरो-

1 Tib. 394b, l. 2.

हितेन राजाभिहितः। देव सुधनः कुमारो मनोहरया अतीव सक्तो न शक्यते प्रेषयितुम्। साधनं सज्जीक्रियताम्। निर्गतः कुमारोऽन्तःपुरात् प्रेषयितव्यो यथा मनोहरायाः सकाशं न प्रविशतीति[1]। राज्ञा अमात्यानामाज्ञा दत्ता। भवन्तः एवं कुरुध्वमिति। अमात्यैः राज्ञः प्रतिश्रुत्य बलौघो हस्त्यश्वरथपदातिसंपन्नोऽनेकप्रहरणोपकरणयुक्तः सज्जीकृतः। ततः कुमारो निर्गतः उक्तो गच्छ कुमार सज्जो बलौघ इति। स कथयति। देव गमिष्यामीति मनोहरां दृष्ट्वा। राजा कथयति। कुमार न द्रष्टव्या कालोऽतिवर्तते। तात यद्येवं मातरं दृष्ट्वा गच्छामि। [गच्छ] कुमारावलोकय जननीम्। स मनोहरासन्तकं चूडामणिमादाय मातुः सकाशमुपसंक्रान्तः पादयोर्निपत्य कथयति। अम्ब अहं कार्वटिकं सन्नामनाय गच्छामि[2]। अयं चूडामणिः सुगुप्तः स्थापयितव्यो न कथंचिन्मनोहराया देयोऽन्यत्र प्राणवियोगादिति। स एवं मातरं सन्दिश्याभिवाद्य च नानायोधबलौघतूर्यनिनादैः संप्रस्थितः। अनुपूर्वेण जनपदानतिक्रम्य तस्य कर्वटकस्य नातिदूरेऽन्यतमद्वृक्षमूलं निश्रित्य वासमुपगतः।

तेन खलु समयेन वैश्रवणो महाराजोऽनेकयक्षपरिवारोऽनेकयक्षशतपरिवारोऽनेकयक्षसहस्रपरिवारोऽनेकयक्षशतसहस्रपरिवारस्तेन पथा यक्षाणां यक्षसमितं संप्रस्थितः। तेन तस्य पथा

1 *Divyā.*, p. 446: प्रतिवसतीति।

2 *Divyā.* p. 245 inserts here the following stanza:

दुहिता शत्रुकल्पस्य किन्नरेन्द्रस्य मानिनी।
पाल्या विरहशोकार्ता मद्वात्सल्यधिया त्वया॥

गच्छतः खगपथे यानमवस्थितम्। तस्यैतदभवत्। बहुशोऽहमनेन पथा समतिक्रान्तो न च मे कदाचिद्यानं प्रतिहतम्। कोऽत्र हेतुर्येन यानं प्रतिहतमिति। स पश्यति सुधनं कुमारम्। तस्यैतदभवत्। अयं भद्रकल्पिको बोधिसत्त्वः खेदमापद्यते युद्धायाभिसंप्रस्थितः। साहाय्यमस्य करणीयम्। अयं कर्वटकः सन्नामयितव्यः। न च कस्यचित्प्राणिनः पीडा कर्तव्येति विदित्वा पांचिकं महायक्षसेनापतिमामन्त्रयते। एहि त्वं पांचिक सुधनस्य कुमारस्य कर्वटकमयुद्धेन सन्नामय। न च ते कस्यचित्प्राणिनः पीडा कर्तव्येति। तथेति पांचिकेन महायक्षसेनापतिना वैश्रवणस्य महाराजस्य प्रतिश्रुत्य दिव्यश्चतुरंगो बलकायो निर्मितः। तालमालप्रमाणाः पुरुषाः पर्वतप्रमाणा हस्तिनः हस्तिप्रमाणा अश्वाः। ततो नानाखड्गमुसलतोमरप्रासचक्रशक्तिशरपरश्वधः शस्त्रविशेषेण नानावादित्रसंक्षोभेण च महाभयमुपदर्शयन् महता बलौघेन पांचिकः कर्वटमनुप्राप्तः।

हस्त्यश्वरथनिर्घोष[नाना]वादित्र[नि]स्वनात्।
यक्षाणां स्वप्रभावाच्च प्राकाराः प्रपपात वै॥

ततस्ते कर्वटकनिवासिनं बलौघं दृष्ट्वा तच्च प्राकारपतनं परं विषादमापन्नाः पप्रच्छुः। कुत एष बलौघ आगच्छतीति। ते कथयन्ति। शीघ्रं द्वाराणि मुंचत। एष पृष्ठतः सुधनः कुमार आगच्छति। तस्यैष बलौघः। यदि चिरं धारयिष्यथ। सर्वथा [स्वस्था] न भविष्यथेति[1]। ते कथयन्ति।

1 Tib. 396b, l. 3 ; ཐམས་ཅད་རྗེས་མེད་པར་འགྱུར།

व्युत्पन्ना न वयं राज्ञो न कुमारस्य धीमतः ।
नृपपौरुषकेभ्यो[1]ऽस्मि भीताः सन्त्वासमागताः ॥

तैर्द्वाराणि मुक्तानि । ततः उच्छ्रितध्वजपताकाः पूर्णकलशैर्नानाविधतूर्यनिनादैः सुधनं कुमारं प्रत्युद्गताः । तेन च समाश्वासितास्तदभिप्रायाश्च राजभटाः स्थापिता निपकाश्च गृहीताः[2] करप्रत्ययाश्च निबद्धाः । ततस्तं कर्वटकं स्फीतीकृत्य सुधनः कुमारो निवृत्तः ।

धनेन च राज्ञा तामेव रात्रिं स्वप्नो दृष्टः । गृध्रेणागत्य राज्ञ उदरं स्फोटयित्वा अन्त्राण्याकृष्य सर्वं तन्नगरमन्त्रैर्वेष्टितं सप्त च रत्नानि गृहं प्रवेश्यमानानि दृष्टानि । ततो राजा भीतस्त्रस्तः आहृष्टरोमकूपो लघुलघ्वेवोत्थाय महा[र्हे]शयने निषद्य करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । मा हैव मे अतो निदानं राज्याच्च्युतिर्भविष्यति जीवितस्य वा अन्तराय इति । स प्रभातायां रजन्यां तं स्वप्नं ब्राह्मणाय पुरोहिताय निवेदयामास । स संलक्षयति । यादृशो देवेन स्वप्नो दृष्टो नियतं कुमारेण कर्वटको निर्जितः । वितथनिर्देशः करणीय इति विदित्वा कथयति । देव न शोभनः स्वप्नः । नियतमतो निदानं देवस्य राज्याच्च्युतिर्भविष्यति जीवितस्य वान्तरायः । केवलं त्वत्रास्ति प्रतीकारः । स च ब्राह्मणकेषु मन्त्रेषु दृष्टः । कोऽसौ प्रतीकारः । देव उद्याने पुष्करिणी

1 Tib. 396b, l. 3; རྒྱལ་པོ་དེ་ཞེ་ཕྱས་མཚོ་རྣམས་ཀྱིས །
2 Tib. 396b, l. 5; དཔྱ་ཤང་བཅད །

सुरूपा प्रामाणिका कर्तव्या । ततः सुधया प्रलेप्तव्या । सुसंमृष्टां कृत्वा क्षुद्रमृगाणां रुधिरेण पूरयितव्या । ततो देवेन स्नानप्रयतेन तां पुष्करिणीमेकेन सोपानेनावतरितव्यम् । एकेनावतीर्य द्वितीयेनोत्तरितव्यम् । द्वितीयेनोत्तीर्य तृतीयेनावतरितव्यम् । तृतीयेनावतीर्य चतुर्थेनोत्तरितव्यम् । ततश्चतुर्भिर्ब्राह्मणैर्वेदवेदाङ्गपारगैर्देवस्य पादौ जिह्वया निर्लेढव्यौ । किन्नरमेदसा[1] स धूपो देयः । एवं देवो विधूतपापश्चिरं राज्यं पालयिष्यतीति । राजा कथयति । सर्वमेतच्छक्यम् । यदिदं किन्नरमेदमतीव दुर्लभम् । पुरोहितः कथयति । देव यदेव सुलभं तदेव दुर्लभम् । राजा कथयति । यथा कथम् । पुरोहितः कथयति । देव नन्वियं मनोहरा किन्नरी । राजा कथयति । पुरोहित मैवं वद । कुमारस्यात्र प्राणाः प्रतिष्ठिताः । स कथयति । ननु देवेन श्रुतम् ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥
दृढेन ह्यात्मना राजन्कुमारस्यास्य धीमतः ।
शक्ष्यसि ह्यपरां कर्तुं घातयैनां मनोहराम्[2] ॥ इति ।

1 *Divyā.*, p. 448: वसाय

2 Tib. 397b, l. 3-4:

རྒྱལ་པོ་བདག་ཉིད་བརྟན་གྱུར་ནས། །
གཞོན་ནུ་བློ་ལྡན་དེ་ལ་ནི། ॥
གཞན་ཞིག་སྐྱུལ་བར་སྤྱོད་གྱུང་གིས། །
ཡིད་འཕྲོག་འདི་ཞི་དགུམ་པར་མཛོད། ॥

आत्माभिनन्दिनो न किंचिन्न प्रतिपद्यन्ते। इति तेनाधिवासितम्। ततो यथादिष्टं पुरोहितेन कारयितुमारब्धम्। पुष्करिणी खाता सुधया लिप्ता संमृष्टा क्षुद्रमृगाणां च रुधिरमुपावर्तितम्। सुधनस्यान्तःपुरजनेनोपलब्धः। ताः प्रीतमनसः संवृत्ताः। वयं रूपयौवनसंपन्ना इदानीमस्माकं सुधनः कुमारः परिचारयिष्यतीति। ताः प्रमुदिता दृष्ट्वा मनोहरा पृच्छति। किं यूयमतीव प्रहर्षिता इति। यावदपरया स वृतान्तो मनोहरायै निवेदितः। ततो मनोहरा सञ्जातदुःखदौर्मनस्या येन सुधनस्य कुमारस्य जननी तेनोपसंक्रान्ता। पादयोर्निपत्य करुणदीनविलम्बितैरक्षरैरेतमर्थं निवेदयामास। सा कथयति। यद्येवं स्वागमितं कुरु। विचारयिष्यामीति। मनोहरया आगमय्य पुनरपि समाख्यातम्। तयापि विचारितम्। पश्यति भूतम्। ततस्तया स चूडामणिर्वस्त्राणि च मनोहरायै दत्तानि उक्ता च। पुलिके प्राप्ते ते काले आगन्तव्यमेवं ममोपालम्भो न भविष्यतीति। ततो राजा यथानिर्दिष्टेन क्रमेण स्नानप्रयतो रुधिरपूर्णां पुष्करिणीमवतीर्णोत्तीर्णः। ततोऽस्य ब्राह्मणैर्जिह्वया पादौ लीढौ। अचिरमानीयतां किन्नरीति च समादिष्टः। तत्समनन्तरमेव मनोहरा गगनतलमुत्प्लुत्य गाथां भाषते।

स्पर्शसंगमने मह्यं हसितं रमितं च मे।
नागीव बन्धनान्मुक्ता एषा गच्छामि सांप्रतम्॥ इति।

राज्ञा च दृष्टा वायुपथेन गच्छन्ती। स भीतः पुरोहितमामंत्रयते। यदर्थं कृतो यत्नः स न संपन्नो मनोहरा किन्नरी पला-

यत इति। पुरोहितः कथयति। देव सिद्धोऽर्थः अपगतपापो देवः संवृत्तः सांप्रतमिति।

ततो मनोहरायाः खगपथेन गच्छन्त्या एतदभवत्। यदहमेतामवस्थां प्राप्ता तत्तस्य ऋषेर्व्यपदेशात्। यदि तेन नाख्यातमभविष्यत् नाहं ग्रहणं गताभविष्यम्। तेन हि यास्यामि तावत्तस्य ऋषेः सकाशमिति। सा तस्याश्रमपदं गता। पादाभिवन्दनं कृत्वा तमृषिमुवाच। महर्षे त्वद्व्यपदेशादहं ग्रहणं गता मनु[ष्य]संस्पर्शश्च संप्राप्ता। जीवितान्तरायश्च मे नास्ति संवृत्तः। तद्विज्ञापयामि। यदि कदाचित्सुधनः कुमार आगच्छेन्मां समन्वेषमाणस्तस्येमामङ्गुलिमुद्रां दातुमर्हसि। एवं च वक्तुम्। कुमार विषमाः पन्थानो दुर्गमाः। खेदमापत्स्यसे निवर्तस्वेति। यदि च निवार्यमाणो नो तिष्ठेत् तस्य मार्गं व्यपदेष्टुमर्हसि। कुमार मनोहरया समाख्यातम्। उत्तरे दिग्भागे त्रयः कालपर्वतास्तानतिक्रम्य अपरे त्रयस्तानतिक्रम्य अपरे त्रयस्तानतिक्रम्य अपरे त्रयस्तानतिक्रम्य हिमवान् पर्वतराजः। तस्योत्तरेणोत्कीलकपर्वतः। ततः कूजको[1] जलपथः[2] खदिरक एकधारको वज्रकः कामरूपी उत्कीलकः ऐरावतकः अधुनानः[3] प्रमोक्षणः। एते ते पर्वताः समतिक्रमणीयाः। तत्र खदिरके पर्वते गुहाप्रवेशः एकधारके च

1 Ms. & *Divyā.*, कुलको

2 Tib 399a, l. 1: དེ་ནས་ལམ་ཆུ་སྦྲ་ཅན་དང་།

3 Tib. 399a, l. 2: མི་གཡོ་བ་དང་། =अचल। Ms. अवेवाणः & *Divyā.*, अघोवाणः।

उत्कीलके। वज्रके तु पक्षिराजेन प्रवेशः। एभिरुपायैस्ते पर्वता अतिक्रमणीयाः। यन्त्राणि च भंक्तव्यानि। अजवक्त्रो मेण्ढकः पुरुषो राक्षसरूपी पिङ्गलो [हन्तव्यः[1]।] गुहायां लालास्रोतसा महता अजगरो वेगेन प्रधावति। स ते विक्रमेण हन्तव्यः।

अर्धान्तरगतं नागं यत्र पश्येत् किरीटकम्[2]।
चापमुक्तेन बाणेन हन्तव्यो मम कारणात्॥
यत्र पश्येत द्वौ मेषौ संघट्टन्तौ परस्परम्।
तयोः शृङ्गमेकं भंक्त्वा मार्गं प्रतिलप्स्यसे॥
आयसौ पुरुषौ दृष्ट्वा शस्त्रपाणी महाभयौ।
तयोरेकं ताडयित्वा[3] मार्गं प्रतिलप्स्यसे॥
संकोचयन्तीं प्रसारयन्तीं राक्षसीमायसं मुखम्।
यदा पश्येत्तदा कीलं[4] ललाटे तस्या निखानयेत्॥
शिलावर्तस्तथा कूपो विलंघ्यस्ते षष्टिहस्तकः।
हरिपिङ्गलकेशाक्षो दारुणो यक्षराक्षसः[5]॥

1 Ms. सिंहकः instead of मेण्ढकः। Tib. 399a l. 4: ལུག་ལྡེ་བུ་དང་། སྐྱེས་བུ་སྲིན་པོ་སེར་སྐྱའི་གཟུགས་ཅན་དག་ཀྱང་གཞོམ་པར་བགྱིའོ། ཕུག་ན་སྦྲུལ་ཁ་ཆུའི་རྒྱུན་ཆེན་པོའི་ཤུགས་རྒྱུག་པ་ཞིག་མཆིས་ཏེ། དེ་ནི་ཞོ་ཤས་གཞོམ་པར་བགྱིའོ།

2 Ms. अरान्तरगता नाभी यत्र पश्येत् तत्र किरीटः। Cf. *Divyā*. p. 451. This line has been changed in the light of the Tib. rendering.

3 *Divyā*. p. 451: पीडयित्वा

4 Ibid. कीलकं

5 See Tib. 399b, l. 1.

कार्मुकं मण्डलं कृत्वा[1] हन्तव्यश्च दुरासदः ।
नद्यश्च बलतस्तार्या नक्रग्राहसमाकुलाः ॥

नङ्गा पतङ्गा तपनी चिला रुदनी हसनी आशीविषा वेत्रवती च ।

नङ्गायां राक्षसीकोपा पतङ्गायाममनुष्यकाः ।
तपन्यां ग्राहबहुलत्वं चिलायां कामरूपिणः ॥
रुदन्यां किन्नरीचेट्यो हसन्यां किन्नरीस्नुषा ।
आशीविषायां नानाविधाः सर्पा वेत्रनद्यां तु शाल्मलिः ॥
नङ्गायां धैर्यकरणं[2] पतङ्गायां पराक्रमः ।
तपन्यां ग्राहमुखबन्धश्चिलायां विविधं गीतम् ॥

रुदन्यां सौमनस्येन समुत्तारः । हसन्यां तूष्णींभावयोगेन । आशीविषायां सर्पविषमंत्रप्रयोगेन । वेत्रवत्यां तीक्ष्णशस्त्रसंपातयोगेन समुत्तारः । नदीः समतिक्रम्य पंचयक्षशतानां गुल्मकस्थानम् । तद् धैर्यमास्थाय विद्राव्यम् । ततः किन्नरराजस्य भवनमिति । ततो मनोहरा तमृषिमेवमुक्त्वा पादाभिवन्दनं कृत्वा प्रक्रान्ता ।

यावत्सुधनः कुमारस्तं कर्वटकं सन्नाम्य गृहीतप्राभृतो हस्तिनापुरमनुप्राप्तः । श्रुत्वा राजा परां प्रीतिमुपगतः । ततः कुमारो मार्गश्रमं प्रतिविनोद्य पितुः सकाशं गतः । प्रणामं कृत्वा पुरस्तान्निषण्णः । राज्ञा परया संभाषणया संभाषितः । उक्तश्च । कुमार शिवेन

1 Tib. 399b, l. 2: གཞུ་ བཀང་སྟེ །

2 Tib. 399b, l. 4: ནང་ག་ལ་ ནི་ བརྟན་པར་བྱ །

त्वमागतः। देव तव प्रसादात् कर्वटकः संनामितः। नीपका गृहीताः। चित्रकः[1] स्थापितः। इमे तु करप्रत्ययाः। पण्यागारश्च स्थापित इति। राजा कथयति। पुत्र शोभनं प्रतिगृहीतम्। ततः पितुः प्रणामं कृत्वा संप्रस्थितः। राजा कथयति। कुमार तिष्ठ प्राभृतं सहितावेव भोक्ष्यामः। देव गच्छामि चिरदृष्टा मे मनोहरा। अलं कुमार अद्य गमनेन। तिष्ठ श्वो गमिष्यसीति। सोऽनुरुध्यमान [एवमाह। तात अद्यैव मयावश्यं गन्तव्यम्। राजा तूष्णीमवस्थितः। ततः] कुमारः स्वगृहं गतः। पश्यति श्रीविवर्जितमन्तःपुरद्वारम्। स चिन्तापरः प्रविष्टो मनोहरां न पश्यति। इतश्चामुतश्च संभ्रान्तः शून्यहृदयः शब्दं कर्तुमारब्धः [मनोहरा] मनोहरेति। यावदन्तःपुरं सन्निपतितम्। भोः स्त्रियः क्षेपं कर्तुमारब्धः। विद्धोऽसौ हृदयशल्येन सुतरां प्रष्टुमारब्धः। ताभिर्यथाभूतं समाख्यातम्। स शोकेन संमुह्यते। ताः स्त्रियः कथयन्ति। देव अन्तःपुरे तत्प्रतिविशिष्टतराः स्त्रियः सन्ति। किमर्थं शोकः क्रियते। स पितुर्नैर्गुण्यमुपश्रुत्य कृतघ्नतां च मातुः सकाशमुपसंक्रान्तः। पादयोर्निपत्य कथयति। अम्ब

मनोहरां न पश्यामि मनोरथगुणैर्युताम्।
साधुरूपसमायुक्ता क्व गता मे मनोहरा॥
मनसा संप्रधावामि मनो मे संप्रमुह्यति।
हृदयं दह्यते चैव रहितस्य तया भृशम्॥

1 Tib. 400a, l. 3: སྣ་བོ་ (=Leader) བསྐོས་ ལགས་ ཏེ | *Divyā.*, p. 451: चिन्तकः।

मनोऽभिरामा च मनोहरा च सा
मनोऽनुकूला च मनोरतिश्च मे ।
सन्तप्तदेहोऽस्मि मनोहरां विना
कुतो ममेदं व्यसनं समागतम् ॥ इति ।

सा कथयति । पुत्र कृच्छ्रसंकटसंबाधप्राप्ता मनोहरा इति मया प्रमुक्ता । अम्ब यथाकथम् । तया यथावृत्तं सर्वं विस्तरेण समाख्यातम् । स पितुर्नैर्गुण्यमकृतज्ञतां चोक्ता कथयति । अम्ब कुत्र गता कतरेण पथेनेति । सा कथयति । पुत्र

एषः असौ पथा शैल ऋषिसंघनिषेवितः ।
उषितो धर्मराजेन यत्र याता मनोहरा ॥ इति ।

स मनोहरावियोगदुःखार्तः कृच्छ्रं विललाप करुणं परिदेवमानः ।

मनोहरां न पश्यामि मनोरथगुणैर्युताम् । पूर्ववद्यावत् ।
कुतो ममेदं व्यसनं समागतम् ॥ इति ।

ततो मात्राभिहितः । पुत्र सन्त्यस्मिन्नन्तःपुरे तत्प्रतिविशिष्टतराः स्त्रियः । किमर्थं शोकः क्रियते इति । कुमारः कथयति । अम्ब कुतो मे रतिः प्राप्यतामिति । स तया समाश्वास्यमानोऽपि शोकसन्तप्तस्तस्याः प्रवृत्तिं समन्वेषमाण इतश्चामुतश्च परिभ्रमितुमारब्धः। तस्य बुद्धिरुत्पन्ना । यत एव लब्धा तमेव तावत्पृच्छामीति । स फलकस्य लुब्धकस्य सकाशं गतः । पृच्छति । मनोहरा कुतस्त्वया लब्धा इति । अमुष्मिन् पर्वतपार्श्वे ऋषिः प्रतिवसति । तस्याश्रमपदे ब्रह्मसभा नाम पुष्करिणी । तस्यां स्नातुमवतीर्णा । ऋषिव्यपदेशेन

लब्धा इति । स संलक्षयति । ऋषिरिदानीमभिगन्तव्यः । तस्मात्प्रवृत्तिर्भविष्यतीति । एष च वृत्तान्तो राज्ञा श्रुतः । मनोहरावियोगात्कुमारोऽतीव विक्लव इति । ततो राज्ञाभिहितः । कुमार किमसि विक्लवः । इदानीं तत्प्रतिविशिष्टमन्तःपुरं व्यवस्थापयामीति । स कथयति । तात न शक्यं मया तामनानीयान्तःपुरस्थेन भवितुम् । स राज्ञा बह्वप्युच्यमानो न निवर्तते[1] । [ततो राज्ञा नगरप्राकारशृङ्गाटकेष्वारक्षकाः पुरुषाः स्थापिता यथा कुमारो न निष्कासतीति । कुमारः कृत्स्नां रात्रिं जागर्तुकामः । उक्तं च । पञ्चेमे रात्र्यामल्पं स्वपन्ति बहु जाग्रति । कतमे पञ्च । पुरुषाः स्त्रियमपेक्षमाणाः । प्रतिबद्धचित्तः स्त्रीपुरुषः । उत्क्रुशप्राणी[2] । चौरसेनापतिः । भिक्षुश्चालब्धवीर्य इति । अथ कुमारस्यैतदभवत् । यदि द्वारेण यास्यामि राजा द्वारपालकान् रक्षकांश्च दण्डेनोत्सादयिष्यति यन्न्वहमरक्षितेन पथा गच्छेयमिति । स रात्र्यां व्युत्थाय नीलोत्पलमालाबद्धशिरा येन रक्षिणः पुरुषा न सन्ति तेन तां मालां ध्वजे बद्ध्वावतीर्णः । चन्द्रश्च चोदितः ।

ततोऽसौ चन्द्रमवेक्ष्य मनोहराविरहित एवं विललाप ।

भोः पूर्णचन्द्र रजनीकर तारराज
त्वं रोहिणीनयनकान्त सुसार्थवाह ।
कच्चित् प्रिया मम मनोहरणैकदक्षा
दृष्टा त्वया भुवि मनोहरनामधेया ॥ इति ।

1 Gilgit ms. ends here ; the remaining portion has been taken from the *Divyā.*, pp. 453-461.

2 *Divyā.*, p. 453: उत्क्रोश ऋणी ; Tib. 401b. 1, 5: སྲོག་ཆགས་ངུར་པ །

अनुभूतपूर्वरतिमनुस्मरन् जगाम। ददर्श मृगीम्। तामप्युवाच।

हे त्वं कुरङ्गि तृणवारिपलाशभक्षे
स्वस्त्यस्तु ते चर सुखं न मृगारिरस्मि।
दीर्घेक्षणा मृगवधूकमनीयरूपा
दृष्टा त्वया मम मनोहरनामधेया॥

स तामतिक्रम्यान्यतमं प्रदेशं गतो ददर्श वनं नानापुष्पफलोपशोभितं भ्रमरैरुपभुज्यमानसारम्। ततोऽन्यतमं भ्रमरमुवाच।

नीलाञ्जनाचल सुवर्ण मधुद्विरेफ
वंशान्तराम्बुरुहमध्यकृताधिवास।
वर्णाधिमात्वसदृशायतकेशहस्ता
दृष्टा त्वया मम मनोहरनामधेया॥

तस्मादपि प्रदेशादतिक्रान्तः पश्यत्याशीविषम्। दृष्ट्वा चाह।

भोः कृष्णसर्प तनुपल्लवलोलजिह्व
वक्त्रान्तरोत्पतितधूमकलापवक्त्र।
रागाग्निना तव समो न विषाग्निरुग्रो
दृष्टा त्वया मम मनोहरनामधेया॥

तमपि प्रदेशं समतिक्रान्तो ददर्शापरं कोकिलाभिनादितम्। दृष्ट्वा च पुनस्तं कोकिलमुवाच।

भोः कोकिलोत्तम वनान्तरवृक्षवासिन्
नारीमनोहर पतत्त्रिगणस्य राजन्।

नीलोत्पलामलसमायतचारुनेत्रा

दृष्टा त्वया मम मनोहरनामधेया[1] ॥

तमपि प्रदेशं समतिक्रान्तो ददर्शाशोकवृक्षं सर्वपरिफुल्लम् ।

मङ्गल्यनामान्तरनामयुक्तः

सर्वद्रुमाणामधिराजतुल्यः ।

मनोहराशोकविमूर्च्छितं माम्

एषोऽञ्जलिस्ते कुरु वीतशोकम् ॥

स एवं विक्लवोऽनुपूर्वेण तस्य ऋषेराश्रमपदमनुप्राप्तः । स तमृषिं सविनयं प्रणिपत्योवाच ।

चीराजिनाम्बरधर क्षमया विशिष्ट

मूलाङ्कुरामलकविल्वकपित्थभक्तः ।

वन्दे ऋषे नतशिरा वद मे लघु त्वं

दृष्टा त्वया मम मनोहरनामधेया ॥

ततः स ऋषिः सुधनं कुमारं स्वागतवचनासनदानक्रियादिपुरःसरः प्रतिसंमोद्योवाच ।

दृष्टा सा परिपूर्णचन्द्रवदना नीलोत्पलाभास्वरा

रूपेण प्रियदर्शना सुवदना नीलाञ्चितभ्रूलता ।

त्वं स्वस्थो भुवि भुज्यतां हि विविधं मूलं फलं च प्रभो

पश्चात् स्वस्ति गमिष्यसीति मनसा नावास्ति मे संशयः ॥

इदं ह्यवोचद् वचनं च सुभ्रूः

कुमार तृष्णा त्वयि बाधते मे ।

1 See Tib. 402b. l. 4-5.

महच्च दुःखं वसतां वनेषु

यातां च मां[1] द्रक्ष्यसि निश्चयेन ॥ इति ।

इयं च तयांगुलिमुद्रिका दत्ता । कथयति च । कुमार विषमाः पन्थानो दुर्गमाः खेदमापत्स्यसे निवर्तस्वेति । यदि च निवार्यमाणो न तिष्ठेत् तस्य मार्गमुपदेष्टुमर्हसि । कुमार इदं च तया समाख्यातम् । उत्तरे दिग्भागे त्रयः कालपर्वतास्तानतिक्रम्यापरे त्रयस्तानप्यतिक्रम्य हिमवान् पर्वतराजः । तत्प्रवेशेन त्वया इमानि भैषज्यानि समुदानेतव्यानि । तद्यथा सुधा[2] नामौषधिस्तया घृतं पक्त्वा पातव्यं तेन च ते न तृषा न बुभुक्षा स्मृतिबलं च वर्धयति। वानरः समुदानेतव्यो मन्त्रमध्येतव्यं सशरं धनुर्ग्रहीतव्यं मणयोऽवभासात्मकाः अगदो विषघातकोऽयस्कीलास्त्रयो वीणा च । हिमवतः पर्वतराजस्योत्तरेणोतकीलकः पर्वतः । ततः कूजको जलपथः खदिरकः एकधारको वज्रकः कामरूपी उत्कीलक ऐरावतकोऽधुनानः प्रमोक्षण एते पर्वताः । सर्वे ते समतिक्रमणीयाः। तत्र खदिरके पर्वते गुहाप्रवेश एकधारके च उत्कीलके। वज्रके तु पक्षिराजेन प्रवेशः । एभिरुपायैस्ते सर्वे पर्वताः समतिक्रमणीयाः । यन्त्राणि च भंक्तव्यानि । अजवक्त्रो मेण्ढकः पुरुषो राक्षसरूपी पिङ्गलो हन्तव्यः । गुहायां लालास्रोतसा महताजगरो वेगेन प्रधावति । स ते विक्रमेण हन्तव्यः[3] ।

1 *Divyā.*, p. 455: यातां रमां द्रक्ष्यसि । Tib. 403a, l. 5: གཤེགས་ པར་གྱུར་ ན་ ངེས་པར་ བདག་མཐོང་ངོ །

2 Tib. 403b. l. 1: ཤིན་ཏུ་འོ་མ་ འཛག་ ཅེས་བྱ་བའི་ སྨན་ཡོད་དེ །

अर्थान्तरगतं नागं यत्र पश्येत किरीटकम्[1] ।
चापमुक्तेन[2] बाणेन हन्तव्यो मम कारणात् ॥
यत्र पश्येत द्वौ मेषौ संघट्टन्तौ परस्परम् ।
तयोः शृङ्गमेकं भंक्त्वा मार्गं प्रतिलप्स्यसे ॥
आयसौ पुरुषौ दृष्ट्वा शस्त्रपाणी महाभयौ ।
तयोरेकं ताडयित्वा मार्गं प्रतिलप्स्यसे ॥
सङ्कोचयन्तीं प्रसारयन्तीं राक्षसीमायसं मुखम् ।
यदा पश्येत्तदा कीलं ललाटे तस्या निखानयेत् ॥
शिलावर्तस्तथा कूपो विलंघ्यस्ते षष्टिहस्तकः ।
हरिपिङ्गलकेशाक्षो दारुणो यक्षराक्षसः ॥
कार्मुकं मण्डलं कृत्वा हन्तव्यश्च दुरासदः ।
नद्यश्च [3]बलतस्तार्या नक्रग्राहसमाकुलाः ॥

नङ्गा पतङ्गा तपनी चित्रा रुदनी हसनी आशीविषा वेत्रवती च ।

नङ्गायां राक्षसीकोपः पतङ्गायाममनुष्यकाः ।
तपन्यां ग्राहबहुलत्वं चित्रायां कामरूपिणः ॥
रुदन्यां किन्नरीचेट्यो हसन्यां किन्नरीस्नुषा ।
आशीविषायां नानाविधाः सर्पा वेत्रनद्यां तु शाल्मलिः ।
नङ्गायां धैर्यकरणं पतङ्गायां पराक्रमः ।
तपन्यां ग्राहमुखबन्धश्चित्रायां विविधं गीतम् ॥

1 See above, p. 145. *Divyā.*, p. 456: किटिमकश्च

2 *Ibid.*, अयं मुक्तेन 3 *Ibid.*, बहव०

रुदन्यां सौमनस्येन समुत्तारः। हसन्यां तूष्णींभावेन। आशीविषायां सर्पविषमन्त्रप्रयोगेन समुत्तारो वेत्रनद्यां तीक्ष्णशस्त्रसंपातयोगेन समुत्तारः। नदीमतिक्रम्य पञ्चयक्षशतानां गुल्मकस्थानम्। तद् धैर्यमास्थाय विद्राव्यम्। ततो द्रुमस्य किन्नरराजस्य भवनमिति।

ततः सुधनः कुमारो यथोपदिष्टान् ओषधमन्त्रागदप्रयोगान् समुदानीय तस्य ऋषेः पादाभिवन्दनं कृत्वा प्रक्रान्तः। ततस्तेन यथोपदिष्टाः सर्वे समुदानीताः स्थापयित्वा वानरम्। ततस्तानादाय पुनरपि तस्य ऋषेः सकाशमुपसंक्रान्तः। उक्तश्च। अलं कुमार किमनेन व्यवसायेन किं मनोहरया। त्वमेकाकी असहायः शारीरसंशयमवाप्स्यसीति। कुमारः प्राह। महर्षेऽवश्यमेवाहं प्रयास्यामीति। कुतः

चन्द्रस्य खे विचरतः क्व सहायभावः
दंष्ट्राबलेन बलिनश्च मृगाधिपस्य।
अग्नेश्च दावदहने क्व सहायभावः
अस्मद्विधस्य च सहायबलेन किं स्यात्॥
किं भो महार्णवजलं न विगाहितव्यं
किं सर्पदुष्ट इति नैव चिकित्सनीयः।
वीर्यं भजेत सुमहदूर्जितसत्त्वदृष्टं
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥ इति।

ततः सुधनः कुमारो मनोहरोपदिष्टेन विधिना संप्रस्थितोऽनुपूर्वेण पर्वतनदीगुहाप्रपातादीनि भैषज्यमन्त्रागदप्रयोगेन विनिर्जित्य

द्रुमस्य किन्नरराजस्य भवनसमीपं गतः। कुमारोऽपश्यत

तन्नगरमदूरं श्रीमदुद्यानोपशोभितम्।
नानापुष्पफलोपेतं नानाविहगसेवितम्॥
तडागदीर्घिकावापीकिन्नरैः समुपावृतम्।
किन्नरीस्तत्र चापश्यत पानीयार्थमुपागताः॥

ततस्ताः सुधनकुमारेणाभिहिताः। किमनेन बहुना पानीयेन क्रियत इति। ताः कथयन्ति। अस्ति द्रुमस्य किन्नरराजस्य दुहिता मनोहरा नाम। सा मनुष्यहस्तगता बभूव। तस्याः स मनुष्यगन्धो नश्यति। सुधनः कुमारः पृच्छति। किमेते घटाः समस्ताः सर्वे तस्या उपरि निपात्यन्ते आहोस्विदानुपूर्वेणेति। ताः कथयन्ति। आनुपूर्व्या। स संलक्षयति। शोभनोऽयमुपाय इमामंगुलिमुद्रामेकस्मिन् घटे प्रक्षिपामीति। तेनैकस्याः किन्नर्या घटेऽनालक्षितं प्रक्षिप्ता। सा च किन्नरी अभिहिता। अनेन त्वया घटेन मनोहरा तत्प्रथमतरं स्नापयितव्या। सा संलक्षयति। नूनमत्र कार्येण भवितव्यम्। ततस्तयासौ घटः प्रथमतरं मनोहराया मूर्ध्नि निपातितो यावदंगुलिमुद्रा उत्सङ्गे निपतिता। सा मनोहरया प्रत्यभिज्ञाता। ततः किन्नरीं पृच्छति। मा तत्र कश्चिन्मनुष्योऽभ्यागतः। साह। अभ्यागतः। गच्छैनं प्रच्छन्नं प्रवेशय। तया प्रवेशितः सुगुप्ते प्रदेशे स्थापितः।

ततो मनोहरा पितुः पादयोर्निपत्य कथयति। तात यद्यसौ सुधनः कुमार आगच्छेद् येनाहं हृता तस्य त्वं किं कुर्याः। स कथयति। तमहं खण्डशतं कृत्वा चतसृषु दिक्षु क्षिपेयं मनुष्यः

असौ किं तेनेति। मनोहरा कथयति। तात मनुष्यभूतस्य कुत इहागमनम्। अहमेवं ब्रवीमीति। ततो द्रुमस्य किन्नरराजस्य पर्यवस्थानो विगतः। ततो विगतपर्यवस्थानः कथयति। यद्यसौ कुमार आगच्छेत् तस्य हि त्वां सर्वालङ्कारविभूषितां प्रभूतवित्तोपकरणैः किन्नरीसहस्रपरिवृतां भार्यारत्नं दद्यामिति। ततो मनोहरया हृष्टतुष्टप्रमुदितया सुधनः कुमारो दिव्यालङ्कारविभूषितो द्रुमस्य किन्नरराजस्योपदर्शितः। ततो द्रुमः किन्नरराजः सुधनं कुमारं ददर्शाभिरूपं दर्शनीयं प्रासादिकं परमया शुभवर्णपुष्कलतया समन्वागतम्। दृष्ट्वा च पुनः परं विस्मयमुपगतः। ततस्तस्य जिज्ञासां कर्तुकामेन सौवर्णास्तम्भा उच्छ्रिताः सप्त तालाः सप्त भेर्यः सप्त शूकराः[1]। आह च।

त्वया कान्त्या जितास्तावदेते किन्नरदारकाः।
संदर्शितप्रभावस्तु दिव्यसम्बन्धमर्हसि ॥
अत्यायतं शरवणं कृत्वोद्धृत्य शरं क्षणात्।
व्युप्तमन्यूनमुच्चित्य पुनर्देहि तिलाढकम् ॥
सन्दर्शय धनुर्वेदे दृढलक्ष्यादिकौशलम्।
ततः कीर्तिपताकेयं तवायत्ता मनोहरा ॥

सुधनः कुमारो बोधिसत्त्वः। कुशलाश्च भवन्ति बोधिसत्त्वास्तेषु तेषु शिल्पस्थानकर्मस्थानेषु देवताश्चैषामौत्सुक्यमापत्स्यन्ते अविघ्नभावाय। ततो बोधिसत्त्वो नृत्यगीतवीणापणवसुघोषक-

1 Tib. 406a. I. 5: ཕག་བདུན།

वल्लरीमृदङ्गादिनानाविधेन दैवत्योपसंहृतेन वादित्रविशेषेण समन्ता-दापूर्यमाणोऽनेकैः किन्नरसहस्रैः परिवृतः।

शतक्रतुसमादिष्टैर्यक्षैः शूकररूपिभिः।
उत्पाटिते शरवणे समे व्युप्तं तिलाढकम्॥
एकीकृतं समुच्चित्य शक्रसृष्टैः पिपीलकैः।
कुमारः किन्नरेन्द्राय विस्मिताय न्यवेदयत्॥

नीलोत्पलदलाभेनासिना गृहीतेन पश्यतो द्रुमस्य किन्नर-राजस्य सौवर्णस्तम्भसमीपं गत्वा तान् स्तम्भान् कदलीच्छेदेन खण्डखण्डं छेत्तुमारब्धः। ततस्तान् तिलशोऽवकीर्य सप्ततालान् सप्तभेरीः सप्त च शूकरान् बाणेन विध्य सुमेरुवदकम्प्योऽवस्थितः। ततो गगनतलस्थाभिर्देवताभिश्च किन्नरशतसहस्रैर्हाहाकारकिलि-किलाप्रक्ष्वेडोच्चैर्नादो मुक्तो यं दृष्ट्वा च किन्नरराजः परं विस्मय-मुपगतः। ततः किन्नरीसहस्रस्य मनोहरासमानरूपस्य मध्ये मनोहरां स्थापयित्वा सुधनः कुमारोऽभिहितः। एहि कुमार प्रत्य-भिजानासि मनोहरामिति। ततः सुधनः कुमारस्तां प्रत्यभिज्ञाय गाथाभिगीतेनोक्तवान्।

यथा द्रुमस्य दुहिता ममेह त्वं मनोहरा।
शीघ्रमेतेन सत्येन पदं व्रज मनोहरे॥

ततः सा द्रुतपदमभिक्रान्ता। किन्नराः कथयन्ति। देवायं सुधनः कुमारो बलवीर्यपराक्रमसमन्वितो मनोहरायाः प्रतिरूपः। किमर्थं विप्रलभ्य। दीयतामस्य मनोहरेति। ततो द्रुमः किन्नर-राजः किन्नरगणेन संवर्णितः सुधनं किन्नराभिमतेन महता

सत्कारेण पुरस्कृत्य मनोहरां दिव्यालङ्कारविभूषितां वामेन पाणिना गृहीत्वा दक्षिणेन सौवर्णभृङ्गारं सुधनः कुमारोऽभिहितः। कुमार एषा ते मनोहरा किन्नरीपरिवृता भार्यार्थाय दत्ता। अपरिचिता मानुषाः। यथैनां न परित्यक्ष्यसीति। परं तातेति सुधनः कुमारो द्रुमस्य किन्नरराजस्य प्रतिश्रुत्य किन्नरभवनस्थो मनोहरया सार्धं निष्पुरुषेण तूर्येण क्रीडते रमते परिचारयति।

सोऽपरेण समयेन स्वदेशमनुस्मृत्य मातापितृवियोगजेन दुःखेनात्याहतो मनोहराया निवेदयति। मातापितृवियोगजं मे दुःखं बाधत इति। ततो मनोहरया एष वृत्तान्तो विस्तरेण पितुर्निवेदितः। स कथयति। गच्छ कुमारेण सार्धमपक्रान्तया[1] ते भवितव्यं विप्रलम्भका मनुष्याः। ततो द्रुमेण किन्नरराजेन प्रभूतं मणिमुक्तासुवर्णादीन् दत्त्वानुप्रेषितः। स मनोहरया सार्धमुपरिविहायसा किन्नरखगपथेन संप्रस्थितोऽनुपूर्वेण हस्तिनापुरनगरमनुप्राप्तः[2]। ततो हस्तिनापुरं नगरं नानामनोहरेण सुरभिणा गन्धविशेषेण सर्वदिगामोदितम्। श्रुत्वा धनेन राज्ञानन्दभेर्यश्च ताडिताः। सर्वं च तन्नगरमपगतपाषाणशर्करकठल्लं कारितं चन्दनवारिसिक्तमामुक्तपट्टदामकलापसमुच्छ्रितध्वजपताकं सुरभिधूपघटिकोपनिबद्धं नानापुष्पावकीर्णरमणीयम्। ततः कुमारोऽनेकनरवरसहस्रपरिवृतो मनोहरया सार्धं हस्तिनापुरं

1 Tib. 407b. I. 2: བག་ཡོད་པར་གྱིས་ཤིག ། =अप्रमादेन भवितव्यम्।

2 Tib. 407b. I. 4.

नगरं प्रविष्टः। ततो मार्गश्रमं प्रतिविनोद्य विविधानि रत्नान्यादाय पितुः सकाशमुपसंक्रान्तः। पित्रा कण्ठे परिष्वक्तः पार्श्वे राजासने निषण्णः। किन्नरनगरगमनागमनं च विस्तरेण समाख्यातम्।

ततो धनेन राज्ञातिबलवीर्यपराक्रम इति विदित्वा राज्याभिषेकेणाभिषिक्तः। सुधनः कुमारः संलक्षयति। यन्मम मनोहरया सार्धं समागमः संवृत्तो राज्याभिषेकश्चानुप्राप्तस्तत पूर्वकृतहेतुविशेषाद् यन्न्वहमिदानीं दानानि दद्यां पुण्यानि कुर्यामिति। तेन हस्तिनापुरे नगरे द्वादशवर्षाणि निरर्गलो यज्ञ इष्टः।

स्यात खलु ते महाराजान्यः स तेन कालेन तेन समयेन सुधनः कुमारो वेति। न खल्वेवं द्रष्टव्यम्। अपि त्वहमेव तेन कालेन तेन समयेन बोधिसत्त्वचर्यायां वर्तमानः सुधनो नाम राजा बभूव। यन्मया मनोहरानिमित्तं बलवीर्यपराक्रमो दर्शितो द्वादशवर्षाणि निरर्गलो यज्ञ इष्टो न तेन मयानुत्तरा सम्यक्संबोधिरधिगता किन्तु तद्दानं तच्च वीर्यमनुत्तरायाः सम्यक्संबोधेर्हेतुमात्रकं प्रत्ययमात्रकं संभारमात्रकम्[1] ]।

1 See Tib. 407b. last word, Several leaves of the Gilgit Ms. corresponding to Tib. folios 408-506 are lost.

......दर्शनीया प्रासादिका चंचा माणविका। तां प्रोत्साहयामः। सा तैर्दूतैराहूयोक्ता। यत्र खलु भगिनि [पूर्वं नो लाभसत्कार एवमेवासीत्। इदानीं लोकाः श्रमणगौतमस्य सकाशं गच्छन्ति। तस्य सत्कारं कुर्वन्ति। अ]स्माकं लाभसत्कारः सर्वेण सर्वं समुच्छिन्नः[1]। सा त्वमध्युपेक्षसे। चंचा माणविका कथयति। [आर्यका मया किं करणीयम्। भगिनि तव ज्ञातीनां कृते श्रमणगौतमेन सह अब्रह्मचर्यं चरितव्यम्। अपवादश्च तस्य दातव्यः। एतेन नः पूर्ववत्] लाभसत्कारो भवेदिति। एवमुक्ता चंचा माणविका परिव्राजिका संबहुलानामन्यतीर्थिकप[रिव्राजकानामेवमाह। आर्यकाः श्रमणगौतमस्यापवादमहं न उत्सहे। भगिनि यावत् त्वं श्रमणगौतमस्यापवादं नोत्सहसे तावद् वयं त्वया सह नाल]पिष्यामो न संलपिष्यामो नालोकयिष्यामो न व्यवलोकयिष्यामः। न च ते सर्वावासेषु प्रज्ञ[पयिष्यसि आसनानि। अथानुशोचन्ती त्वं नरकगतिमवाप्स्यसि। अल्पप्रज्ञाः स्त्रियः। सा भीता] कथयति। एषाहमार्यका यन्मया करणीयम्। एहि त्वं भगिनि जेतवनमभीक्ष्णं गच्छ। कंचित् कालं गत्वा श्रमणस्य गौतमस्य [अपवादं दापय। सा प्रत्यहमुत्थाय जेतवनं गता। यावत् सा भाजनमेकं बद्ध्वा येन भग]वांस्तेनोपसंक्रान्ता। तेन खलु समयेन भगवाननेकशतानां पुरस्तान्निषण्णो धर्मं देशयति। अद्राक्षीद् भगवा[न् दूरतश्चंचां माणविकाम्। दृष्ट्वा तस्यैतदभवत्। अद्य मम कर्मकृता]नि

1 Tib 504a, l. 2.

लब्धसंभाराणि परिणतप्रत्ययानि ओघवत् प्रत्युपस्थितानि अवश्यंभावीनि कोऽन्यः प्रत्यनुभविष्यतीति। ततश्चंचा माणविका परिव्राजिका [भगवतः पुरतः स्थित्वाह।

अहमापन्नसत्त्वास्मि त्वया कामोपसेवनात्।
रतिर्लब्धा यशो घुष्ट] धर्मं वदसि सांप्रतम्॥ इति।

भगवानाह। अभूतवादी नरकानुपैति।

चंचा माणविका प्राह। यश्चापि कृत्वा न करोमीति चाह।

भगवानाह। [हीनो हि धर्मैरुभयत्र लोके
तुल्यामवस्थां समुपैति मर्त्यः[1]॥

अथ शक्रो देवेन्द्रः अहो] वतेयं चंचा माणविका भगवन्तं विहेठयिष्यति भिक्षुसंघं चेति विदित्वा तद् भाजनमृद्धया पृथिव्यां निपातितवान्। ततश्चंचा माणविका [लज्जिता दूरमपसृता। अथ स्थविरस्थविरा भिक्षवो भगवन्तमेवमाहुः][2]।

व्याकृता भदन्त राज्ञः प्रसेनजितो धर्माधिकारिकी कथा। व्याकृता च यत्रानुत्तरायां सम्यक्संबोधौ तत्प्रथमतरचित्तमुत्पादितं याव[त् सम्यक्संबुद्धानां लाभसत्कारकथा। वयमनवतप्ते महासरसि भगवतः पुरस्तात् स्वक]स्वकानां कर्मणां

1 Tib. 505a, 1. 4: དམན་པའི་ཆོས་ཅན་མི་ནི་དེ་གཉི་ག། ཕ་རོལ་དག་དུ་འདྲ་བར་འགྲོ་བར་འགྱུར།

2 Tib. 505a, 1. 6.

प्लोतिं व्याकुर्याम इति। अधिवासयति भगवान् स्थविरस्थविराणां भिक्षूणां तूष्णींभावेन।

धर्मता खलु बुद्धानां भगवतां [जीवतां तिष्ठतां ध्रियमाणानां यापयतां यदुत दशावश्यकरणीयानि भवन्ति। न तावद् बुद्धा भग]वन्तः परिनिर्वान्ति। यावद् बुद्धो न व्याकृतो भवति। सत्त्वेनावैवर्त्यमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितं भवति। सर्वबुद्धविनेया वि[नीता भवन्ति। त्रिभाग आयुषः उत्सृष्टो भवति। सीमाबन्धः कृतो भवति। श्रावकयुगमग्रतायां निर्दि]ष्टं भवति। श्रावस्त्यां महाप्रातिहार्यं विदर्शितं भवति। सांकाश्ये नगरे देवावतरणं विदर्शितं भवति। मातापितरौ सत्येषु प्रतिष्ठितौ [भवतः। अनवतप्ते महासरसि श्रावकसंघेन सार्धं पूर्विका कर्मप्लोतिदेशना व्याकृता भवति[1]।

अथ बुद्धो] भगवान् श्रावकसंघेन सार्धमनवतप्ते महासरसि पूर्विकां कर्मप्लोतिं व्याकर्तुकामो भिक्षूनामन्त्रयते स्म। आगम[य भिक्षवो येनानवतप्तं महासरस्तेन स्वकस्वकानां पूर्विकां कर्मप्लोतिं व्याकुर्याम। भिक्षवः एवं भदन्त इति] भगवतः प्रत्यश्रौषुः। अथ भगवानेकोनैः पञ्चभिरर्हच्छतैः सार्धं श्रावस्त्यामन्तर्हितः अनवतप्ते महासरसि [चण्डयक्षराक्षसनिषेविते नानापुष्पवृक्षोपशोभिते प्रादुर्भूतः।

तस्मान्महाब्धेरतलाम्बुराशेः]
नद्यश्चतस्रः प्रसृताश्चतुर्दिशः।

1 Tib. 506a, l. 1.

गङ्गा च सिन्धुश्च तथैव पक्षुः
सीता च यन्न प्रतरन्ति मानुषाः ॥

य]स्मिन् समये बुद्धा भगवन्तो लौकिकं चित्तमुत्पादयन्ति। तस्मिन् समये कुन्तपिपीलिकादयोऽपि प्राणिनो भग[वतश्चेतसा चित्तमाजानन्ति। अथ नन्दोपनन्दयोर्नागराजयोरेतदभवत्। किमर्थं भगवता लौकिकं चित्तमुत्पादितम्। प]श्यतः। अनवतप्ते महासरसि कर्मप्लोतिं व्याकर्तुकामः। ततस्तस्यानवतप्तस्य महासरसो मध्ये [सर्वसुवर्णखचितरत्नमयकाण्डकिञ्जल्ककर्मकृतरथचक्रोपमसहस्रदलकमलपरिवृतो भगवान् भिक्षुसंघेन सह पद्म]कर्णिकायां निषण्णः। स्थविरस्थविरा अपि भिक्षवोऽन्यासु पद्मकर्णिकासु निषण्णाः।

तेन खलु समयेन [शारिपुत्रो गृध्रकूटपर्वते[1] संघाटिकां सीव्यति स्म। अथ भगवानायुष्मन्तं महामौद्गल्यायनमाह। गच्छ मौद्गल्यायन प्रव्रज्यास]हायकमानयेति। एवं भदन्त इत्यायुष्मान् महामौद्गल्यायनः अनवतप्ते महारसि अन्तर्हितः। गृध्र[कूटपर्वते आयुष्मतः शारिपुत्रस्य पुरतः स्थित्वा एवमाह। आयुष्मन् शारद्वतीपुत्र पञ्चशतार्हद्भिः सह शास्ता एकैकशः] पूर्विकां कर्मप्लोतिं व्याकर्तुकामस्त्वत्प्रतीक्षणपरः। आगच्छ। गच्छामः। स कथयति। आयुष्मन् महामौद्गल्यायन संघाटि[कां सेवित्वा गच्छामि। स कथयति। तथास्तु सहाय। अथ महा-

1 Tib, 506b l. 5. སྐྱེས་སྐྱུར་འདུབ་པོ།

मौद्गल्यायन ऋद्धया पञ्चभिरङ्गु]लीभिः सेवितुमारब्धः। आयुष्मान् शारिपुत्रः कथयति। आयुष्मतो महामौद्गल्यायनस्य ता[वत् सीवनं सद्यो निष्पन्नम् ]। स कथयति। आयुष्मन् शारिपुत्र [सचेत्त्वं न गच्छेर्बलात्त्वां ग्रहीष्यामि। अथायुष्मान् शारिपुत्रस्तस्य काञ्चीमाकृष्य कथयति]। महामौद्गल्यायन ननु त्वं भगवता ऋद्धिमतामग्रो निर्दिष्टः। स त्वमेतांस्तावन्नय पश्चान्मां नेष्यसीति। तत आयुष्मता महा[मौद्गल्यायनेन ते तत्र नीताः। अथ आयुष्मान् शारिपुत्रः संलक्षयति। अयं महर्द्धिकः। सचेत् स्थानमिदं सर्वं] नेष्यतीति स तेन गृध्रकूटे पर्वते उपनिबद्धः। आयुष्मता महामौद्गल्यायनेनाकृष्टो गृध्रकूटः पर्वतः। [अथायुष्मान् शारिपुत्रः संलक्षयति। अनेन गृध्रकूटपर्वतश्चालित]इति। स तेन सुमेरौ पर्वतराजे उपनिबद्धः[1]। पुनरायुष्मता महामौद्गल्यायनेनाकृष्टः सुमेरुः [पर्वतो नन्दोपनन्दौ नागराजौ च चालितौ। अनवतप्तं महासरश्च। सर्वं क्षुब्धम्। अथ स्थविरस्थ]विरा भिक्षवश्चलितुमारब्धाः। पद्मकर्णिकेषु निषण्णास्ते भगवन्तं पप्रच्छुः। किमर्थं भगवन् नन्दो[पनन्दौ नागराजौ चालितौ। भगवानाह। भिक्षवः नन्दोपनन्दयोर्नागराजयोर्नास्ति कम्पनमिति श्रुत्वा तौ ऋद्धिं विकु]र्वितं कुरुत इति। आयुष्मान् शारिपुत्रः संलक्षयति। यत्त्वहं भगवतः पद्मनाभे उपनिबध्नीयामिति। तेन भगवतः पद्मनाभे [उपनिबद्धो निष्कम्पं स्थितः। यदा तस्य ऋद्धिः ऋद्ध्या पराभूता तदा

1 Tib. 507b, l. 3,

आयुष्मन्तं शारिपुत्रमेवमाह। गच्छ। आयु]ष्मन् शारिपुत्र ऋद्धिविकुर्वितमागच्छ। गच्छावः। गच्छायुष्मन् महामौद्गल्यायन। एषोऽहमागतः। एष यावदायुष्मान् महा[मौद्गल्यायनो न प्रत्यागतस्तावदार्यायुष्मान् शारिपुत्रो गतः। भगवतः पादौ शिरसा वन्दित्वा एकान्ते पद्मकर्णिकायां] निषण्णः। ततः पश्चादायुष्मान् महामौद्गल्यायनो गतः। पश्यति आयुष्मन्तं शारिपुत्रम्। स कथयति। आगतोऽसि आयुष्मन् शारिपुत्र। [आवामागतौ[1]।

संशयजाता भिक्षवः सर्वसंशयच्छेत्तारं भगवन्तं पप्रच्छुः। भदन्त भगवता] आयुष्मान् महामौद्गल्यायनः [ऋद्धिमताम]ग्रयो निर्दिष्टः। अथ च पुनरायुष्मता शारिपुत्रेण ऋद्ध्या पराजित इति। भगवानाह। न [भिक्षव एतर्हि अतीतेऽध्वन्यपि शिल्पकुशलेन पराजितः।

भूतपूर्वं मध्य]देशे अन्यतरश्चित्रकराचार्योऽभूत्। स [धनार्थाय] करणीयेन मध्यदेशाद् यवनविषयं गतः। स तत्र यन्त्राचार्यस्य निवेशनेऽवतीर्णः। तेन तस्य प[रिचर्यार्थाय यन्त्रपुत्रिका कृत्वा प्रवेशिता। सा तस्य पादौ धावित्वा स्थिता। अथ स तस्या गमनसमये कथयति। सा] तूष्णीमवस्थिता। स संलक्षयति। नूनं ममैव परिचारिका प्रेषिता। स तां हस्तं गृहीत्वा आकृष्टुमारब्धः। यावच्छृङ्खलिका पुञ्जी[भूता। स लज्जितः संलक्षयति। अहमनेन लज्जापितः। अहमप्येनं सराज-

1 Tib. 508a. l. 6.

परिजनं लज्जाप]यिष्यामीति । तेन द्वाराभिमुखमात्मप्रतिबिम्बकमुद्बन्धकं लिखितम् । कवाटसन्धौ च निलीयावस्थितः । तस्य [चोत्थानकाले तस्मादन्तर्हितः[1] । अथ यन्त्राचार्यः संलक्षयति । दूरागत एषः । कस्माद् द्वारमिदमनत्ररुद्धम् । स प्रविश्य पश्यति यावदु]द्बध्य मृतम् । स संलक्षयति । किंकारणमनेनात्मा जीविताद् व्यवरोपितः । पश्यति तां दारुपुत्रिकां [शृङ्खलिकां पुञ्जीभूताम् । स संलक्षयति एष लज्जापितः । समयोचितमाचारमनुष्ठाय अतृप्तः] कालं करोति । स तं तावन्न सत्करोति यावद् राज्ञे निवेदितमिति । ततस्तेन राज्ञे गत्वा निवेदितम् । देव [आसीद् यवनविषये चित्राचार्यः । स मत्सकाशमागतः । तस्य परिचर्यार्थाय मया दारुपुत्रिका प्रवेशिता । तेन तस्या हस्तौ] गृहीत्वा आकृष्टा शृङ्खलिकापुञ्जेऽवस्थिता । तेन प्रभिन्नेनात्मा उद्बद्धः । तदर्हति देवस्तं प्रत्यवेक्षितुम् । ततः [अहं सत्करोमि । अथ राज्ञा राजपुरुषाः प्रेषिताः । भवन्तो यूयमद्य प्राक् प्रत्यवेक्षध्वम् । अथ ते तत्र गत्वा प्रत्यवेक्षन्ते । तेषामेतदभवत् । अस्माभिः क]थमस्मान्नागदन्तकादवतारयितव्यमिति । अपरे कथयन्ति । पाशश्छेत्तव्यमिति । ते कुठारम् [आदाय छेत्तुमारब्धाः । यावत् पश्यन्ति चित्राचार्यम् । अथ चित्रकलाचार्यः] कवाटान्तरिकायान्निर्गत्य कथयति । भोः पुरुष त्वयाहमेकाकी प्रभिन्नः[2] । त्वं पुनः सराजिकपर्षदो मध्ये

1 Tib. 509a, l. 1.

2 Tib. 509b, 1, 2-3: སྨྲེངས་པར་བྱས་དེ །

मया प्रभि[न्नः। किं मन्यध्वे भिक्षवस्तेन कालेन तेन समयेन योऽसौ यन्त्र]कलाचार्य एष मौद्गल्यायनो भिक्षुः। तेन कालेन तेन समयेन [योऽसौ चित्रकलाचार्यः स एष शारिपुत्रो भिक्षुः]। तदाप्यनेनैष शि[ल्पाचार्यः प]राजितः[1]। एतर्ह्यप्यनेनैष [ऋद्धया पराजितः।

भूयोऽपि योऽनेन शिल्पकुशलेन पराजितस्तच्छ्रूयताम्। भूतपूर्वं भिक्षवो द्वयोश्चित्रकलाचा]र्ययोर्विवादोऽभूत्। एकः कथयति। अहं शोभनं शिल्पं जानामि इति। द्वितीयोऽपि कथयति। अहं शोभनतरं जानामीति। परस्परं [विवदमानौ राजसकाशं गतौ। तस्य पादयोर्निपतितौ। एकः कथयति। अहं शोभनं शिल्पं दर्शयिष्यामि[2]। द्वितीयोऽपि कथयति। अहं शोभनतरं शिल्पं दर्शयिष्यामि। अथ] राज्ञा तयोर्द्वारकोष्ठको दर्शितः। भवन्तो नाहं जाने को युवयोः शोभनतरं शिल्पं जानीते इति। [युवयोरेकैक] एकां भित्तिं चित्रयतु। अथ युवयोः कतरस्य शोभनं शिल्पज्ञानं तन्मे सुविदितं भविष्यति। अथ तयोरेकेन यवनिकां पातयित्वा चित्रक]र्म कृतम्। द्वितीयोऽपराम्। द्वितीयेन षड्भिर्मासैर्भित्तिः परिकल्पिता। यस्य चित्रकर्म परिसमाप्तं स राज्ञः सकाशमुपसंक्रान्तः। उपसंक्रम्य राजानमिदमवोचत्। देव [मम चित्रकर्म परिसमाप्तम्[3]। द्रष्टुमर्हसि। अथ

1 Tib. 509b, l. 4: ཕམ་པར་གྱུར་ཏོ།

2 Tib. 509b, l. 7: འཚལ་ལོ།

3 Tib. 509a, l. 4.

राजा सह परिजनेन द्वारकोष्ठकं दृष्ट्वा हृष्टः कथयति। शोभनं चित्रक]र्मेति। द्वितीयः पादयोर्निपत्य कथयति। इदानीं मदीयं चित्रकर्म द्रष्टुमर्हसि। तेन यवनिकापनीता। छायामात्रं तत्र निपतितम्। राजा [तद् दृष्ट्वा विस्मय]मापन्नः। इदं शोभनं [चित्रकर्मेति। द्वितीयो राज्ञः पादयोर्निपत्य कथयति। देव नै]-तच्चित्रकर्म। अपितु भित्तिपरिकर्मैवमिति। ततो राजा भूयस्या मात्रया परं विस्मयमापन्नः कथयति[1]। अयं शोभनतरः शिल्पिक इति। किं मन्यध्वे भिक्षवो येनानेन [षड्भिर्मासैर्भित्तिः परि-कल्पिता एष एवासौ भिक्षुः शारिपुत्रः। येन षड्भिर्मासैश्चित्र-कर्म कृतमेष एवासौ मौद्गल्यायनो भिक्षुस्तेन कालेन तेन समयेन। तदाप्येषोऽनेन शिल्पेन पराजितः। एतर्ह्यप्यनेनैष ऋद्ध्या पराजितः।

भूतपूर्वं वाराणस्यां नगर्यामुपनि]सृत्य द्वौ ऋषी प्रतिवसतः। शङ्खश्च लिखितश्च। यावदपरेण समयेन देवो वृष्टः। कर्दमो जातः। शङ्खः स्खलितः। कर्दमे पतितः। कुण्डिका भग्ना। तत[स्तेन शापो दत्तः। दुराचार त्वया द्वादशानि वर्षाणि न वर्षितव्यम्। राज्ञा ब्रह्मदत्तेन वाराणसीनिवासिना च जनकायेन श्रुतम्। ततस्तैरसौ गत्वा विज्ञप्तः। महर्षे मैवं क्रियतामिति। स कथयति। न शक्यं मया दुराचारस्य क्षमितुम्। द्वादश वर्षाण्यनेन न [वर्षितव्यम्। अथ राज्ञा ब्रह्मदत्तेन जनकायेन सह] लिखितो विज्ञप्तः। तेनायाचनं

1 Tib. 510b, l. 1.

कृतम्। देवो वृष्टः। किं मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन ऋषिः शङ्खः एष एवासौ मौद्गल्यायनः। [योऽसौ तेन कालेन तेन समयेन ऋषिर्लिखितः। एष एवासौ भिक्षुः शारिपुत्रः। नैतर्ह्येव] तदाप्यनेन ऋद्ध्या पराजितः।

पुनरपि यथैषोऽनेन ऋद्ध्या पराजितस्तच्छ्रूयताम्। लिखितः शङ्खस्य कस्मिंश्चित् प्रयोजने पादयोर्निपतितः। शङ्खेन पद्भ्यां ज[टा आक्रुष्टा[1]। लिखितः कथयति। सूर्योदये तव शिरः स्फुटि]ष्यतीति। शङ्खः कथयति। तस्मा[त् सूर्योदयो न भविष्य]तीति। अन्धकारं लोके प्रादुर्भूतम्। ततो राज्ञा ब्राह्मणगृहपतिभिश्च शङ्खो विज्ञप्तः। महर्षे मैवं क्रियतामिति। स कथयति। [सूर्योदये मम शिरः स्फुटिष्यति। लिखितः कथयति]। यद्येवं मृन्मयं शिरः क्रियताम्। [तेन तथा कृतम्]। यदयं शिरः कृतं सूर्यस्याभ्युदये च स्फुटितम्। किं मन्यध्वे भिक्षवो योऽसौ शङ्खः एष एवासौ मौद्गल्यायनो भिक्षुः। योऽसौ लिखितः [एष एवासौ भिक्षुः शारिपुत्रः। नैतर्ह्येव तदाप्यनेन ऋद्ध्या पराजितः। पुनरपि यथैषोऽनेन ऋद्ध्या पराजितः] तच्छ्रूयताम्[2]।

मध्यदेशाद् दन्तकलाचार्यो दन्ततण्डुलानां प्रस्थमादाय यवनविषयं गतः। स चित्रकलाचार्यगृहेऽवतीर्णः। स च शून्यः। स तस्य भार्यामुवाच। वयस्यभार्ये [किञ्चित् तण्डुलं

1 Tib. 511a, l. 4: མནན་པ།

2 Tib. 511b, l. 2.

पचनाय गृहाण। इत्युक्त्वा प्रक्रान्तः। सा पक्तुमा]रब्धा। काष्ठक्षयः संवृत्तः। न च सिद्धास्ते। तस्याः स्वामी आगतः कथयति। भद्रे किमेतत्। तया विस्तरेण समाख्यातम्। स व्यवलोकयितुमारब्धः पश्यति दन्ततण्डुलान्। स तां विप्र[लम्भयन् कथयति। भद्रे उष्णे पानीये मृष्टे पानीये दत्ते एते सिद्धा भवि]ष्यन्तीति। तयासौ दन्तकलाचार्योऽभिहितः। मृष्टं पानीयमानय इति। तेन सा उक्ता[1]। अन्यतमस्मिन् प्रदेशे वापी लिखिता[2]। तस्यां च कुक्कुरो व्याध्मातको लिखितः। [ततः कुम्भमादाय वापीं मन्यमानस्तत्प्रदेशं गत्वा पश्यति कुक्कुरं व्याध्मा]तकम्। स घ्राणं पिधाय निरीक्षितुमारब्धः। यावत् तस्य तदुदकभाजनं भग्नम्। दन्तकलाचार्यः प्रतिभिन्नः। किं मन्यध्वे भिक्षवो योऽसौ दन्तकलाचार्यः एष एवासौ [मौद्गल्यायनो भिक्षुः। योऽसौ चित्रकलाचार्यः ए]ष एवासौ शारिपुत्रो भिक्षुः।

अपि तु यासां ध्यानविमोक्षसमाधिस[मापत्ती]नां लाभी तथागतस्तासां प्रत्येकबुद्धा नामापि न जानन्ति। यासां प्रत्येक-बुद्धा [लाभिनस्तासां भिक्षुः शारिपुत्रो नामापि न जानीते। यासां लाभी शारिपु]त्रो भिक्षुस्तासां मौद्गल्यायनो भिक्षुर्नामापि न जानीते। यासां मौद्गल्यायनो भिक्षुर्लाभी तासां तदन्ये श्रावका नामापि न जानते। महर्द्धिकः शारिपुत्रो [भिक्षुः। महर्द्धिको महामौद्गल्यायनः। स एव] ऋद्धिमतामग्रो निर्दिष्टः।

शारिपुत्रमौद्गल्यायनवर्गः॥

1 Ms. तेन तामुक्ता। 2 Tib. 511b, l. 7.

## [ स्थविरगाथा ]

अथायुष्मान् काश्यपः स्वां कर्मप्लोतिं व्या[कृ]त्य गिरमत्युदैरयत्[1] ।

... ... ... ... ।
.... .... .... ति फलं महत् ॥
सिंहो यथा पर्वतशैलधारी
विशारदो गच्छति गोचराय ।
स काश्यपो ... ... ...
... ... ... ... ॥

... ... .. ...
... ... ... ... ।
रणे विहारिण्यनवद्यमानसे
तस्मिंश्च संभावये धर्ममुत्तमम् ॥
तस्मिन् धर्मे प्रणिधाय मा[नसं]
... ... रश्चसमागम .... ।
[प्रत्येकबुद्धा] ... ... ...
विशेषगामिष्वनिहीनवृत्तिषु ॥
तस्यैव चैकस्य फलेन कर्मणः
सहस्रकृत्वस्त्रिदशानुपागमत् ।
[विचित्र]माल्याभरणानुलेपनः
प्रणीतकायो ... ... ॥

1 Tib. 512b. l, 1.

... ... ... ...
... ... ध्येषु शुभेष्वहं पुनः ।
पुनश्चेतसा प्रणिधानकारणात्
तस्यैव चैकस्य फलेन कर्मणः ॥
जातो महाशालकुले द्विजो ह्यहं
प्रभूतवित्तो नरनारिसत्कृतः ।
... ... ... ...
... ... ... ... ॥
कृत्वा पटप्लोतिककन्थिकामहं
लोकेऽर्हस्य प्रणिपत्य प्राव्रजम् ।
सोऽहं तथा प्रव्रजितो ह्यपश्यं
जिनं निषण्णं बहुपुत्रचैत्ये[1] ॥
प्रणम्य पादौ च मुनेरवोचं
शास्ता मे भगवान् श्रा[वकस्ते ।
श्रुत्वा च ध]र्मं मधुरं प्रणीतं
यदिच्छसे सर्वदुःखाद्विमोक्तुम् ॥
ये चापि मे पुरुषवरेण तायिना
धर्मा महाकारुणिकेन देशिताः ।
ध्यानानि चत्वारि बलेन्द्रियाणि
[विमोक्षमार्गाङ्गकमाप्तमेव] ॥

1 Tib. 513a, l. 4.

एभिश्च मे पश्चिमदेहधारिभिः
समागमोऽयमृजुभिर्नीरजस्कैः[1] ।
संपन्नवादी हि जिनस्तथागतः
सम्पद्यते शीलवतो यदीच्छति ॥

यथा यथा मे मनसः प्रयान्ति[2]
[सिद्धं तदेतदयमन्तिमो भवः ।
छिन्ना च जातिरपुनर्भवो मम]
... ... ... ... ॥

... ... ... ...
... ...बन्धनमेव छिन्नम् ।
पुत्रोऽहमस्यौरसो धर्मराज्ञो
निर्वास्यामि क्लेशगणक्षयाच्च ॥
धूतवासनानामहमग्रो निर्दिष्टः सर्वदर्शिना ।
क्षीणास्रवो वान्तदोषः [प्राप्तोऽहमचलं पदम् ॥
स्थविरः काश्यपश्चैवं भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति] स्वकं कर्म अनवतप्ते महाह्रदे ॥
काश्यपवर्गः प्रथमः ॥१॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं शारिपुत्रमिदमवोचन् । किमायुष्मता शारिपुत्रेण कर्म कृतं यस्य कर्मणो विपाकेन [महाप्राज्ञो विशारदो भूतः । स कथयति ।

1 Tib. 513b, l. 1.
2 Tib. 513b, l. 2: བསམས་པ །

यदास्य]हमृषिः शान्तमपश्यं श्रमणं तदा ।
प्रत्येकबुद्धं भगवन्तं लूहचीवरधारिणम् ॥
तस्मिंश्चित्तं प्रसाद्याहं धावयित्वा च चीवरम् ।
स्यूत्वा रंक्त्वा च तथा स्पृशो[1] चैनं पुनः पुनः ॥
ममानु[कम्पयाकाशमभ्युद्गम्य ततो ह्यसौ ।
स्वेनैव तेजसादीप्तमात्मभावमदर्शयत् ] ॥
अञ्जलिं संप्रगृह्याहमकार्षं प्रणिधिं ततः ।
तीक्ष्णेन्द्रियो महाप्राज्ञ ईदृशः स्यामहं यथा ॥
आढ्ये[2] कुलेऽभिजायेयं मा चाहं नीचवृत्तिषु ।
मध्ये कुलेऽभिजायेयं प्रव्रज्याबहुलः सदा ॥
[तेन कुशलमूलेन पञ्चजातिशतं मया ।
लब्धा तथैव संप्राप्ता प्रव्र]ज्या चानगारिका ॥
इयं मे पश्चिमा [जातिर्लब्धो] मे मानुषो भवः ।
आराधितः सार्थवाहः संबुद्धोऽयमनुत्तरः ॥
प्रव्रज्या च मया लब्धा शाक्यसिंहस्य शासने ।
अर्हत्त्वं च मया प्राप्तं [शीतीभूतोऽस्मि निर्वृतः] ॥
संमुखं चैव शास्तानां भिक्षुसंघा[ग्रतः स्थितम्] ।
करोति प्रज्ञया श्रेष्ठं धर्मचक्रानुवर्तकम्[3] ॥

1 Tib. 514a, l. 1: བཙྲུགས ।

2 Tib. 514a, l. 3: ཕྱུག་པོ ।

3 Tib. 514a, l. 7.

शारिपुत्रो महाप्राज्ञो भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

शारिपुत्रवर्गो द्वितीयः ॥२॥

[अथ स्थविरस्थविरा] भिक्षव आयुष्मन्तं महामौद्‍गल्यायनमवोचन् । व्याकृता आयुष्मन् महामौद्‍गल्यायन आयुष्मता शारिपुत्रेण स्वकर्मप्लोतिः । इदानीं त्वमपि स्वकां कर्मप्लोतिं व्याकुरु । एवमुक्त [आयुष्मान् महामौद्‍गल्यायनः स्थविरस्थविरान् भिक्षून् इदमवोचत ।

यदास्म्य]हमृषिः पूर्वं वानप्रस्थमुपाश्रितः ।
पुरुषस्तत्र चागम्य प्रव्रज्यां मामयाचत ॥
केशांस्तस्यावरोप्याहं धावयित्वा च चीवरम् ।
रञ्जयित्वा ततः प्रादां सोऽभूदात्तमनास्तदा ॥
एकान्त[मुपगम्याथ पर्यङ्के संनिषद्य च ।
लब्ध्वा चासौ स्वकां बोधिमथाका]शं गत[स्तदा] ॥
प्रामोद्यमुपगम्याहं संप्रगृह्याञ्जलिं ततः ।
अकार्षं प्रणिधिं तत्र प्रार्थयन् ऋद्धिमुत्तमाम्[1] ।
ईदृशी मम रिद्धिः स्याद्यथैवास्य महारिषेः ॥
तेनाहं कुशल[मूलेन यत्र यत्रोपपन्नवान् ।
देवभूतो मनुष्यश्च कृतपुण्यो विरोचितः] ॥

1 Tib. 514b, l. 7.

इयं मे पश्चिमा जातिर्लब्धो मे मानुषो भवः ।
आराधितः सार्थवाहः संबुद्धोऽयमनुत्तरः ॥
प्रव्रज्या च मया लब्धा शाक्यसिंहस्य शासने ।
अर्हत्त्वं च मया प्राप्तं [शीतीभूतोऽस्मि निर्वृतः ॥
अहमृद्धिमतामग्रो निर्दिष्टः सर्वदर्शिना ।
किञ्चित् कृत्वापि] कुशलमनुभूतं सुखं बहु ।
यच्चाप्यकुशलं कर्म शृणुत व्याकरोम्यहम् ॥
पुरोत्तमे राजगृहे चाभूवं श्रेष्ठिदारकः[1] ।
बहिर्गृहस्य क्रीडित्वा प्राविश[मशनाय च ॥
ततो मामेकदा दृष्ट्वा पितरौ रहसि स्थितम् ।
दण्डेन संप्रहृत्याथा]वध्यायन्ते च लज्जिताः ॥
मनःप्रदोषं चाकार्षं पितुर्मातुरथान्तिके ।
यदा महान् भविष्यामि हन्म्येषां नलघात्यया[2] ॥
मनःप्रदोषं कृत्वाहं कायेन नापरं [कृतम् ।
तथापि कालसूत्रेऽनुभूतं दुःखं मया बहु ॥
तेन कर्मावशेषेण जातो मे] पश्चिमो भवः ।
नलघात्यया हनिष्यन्ति श्रमणा अन्यतीर्थिकाः ॥
स एव हि ममाबाधो भविता मरणान्तिकः ।
कर्मावशेषं चरमं ततः क्षीणं भविष्यति ॥

1 Tib. 515a, l. 5: ཚོང་དཔོན་ཁྱེའུ །

2 Tib. 515b, 12: འདམ་བུ་ བཙོས་ བཞིན །

तस्मात् प्रसाद्य [पितरौ प्रव्रज्या विहिता मया ।
तत्प्रसादफलेनैव भूतानां सुगतिं गतः ॥
इति कोलितः] स्थविरो भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्व[कं] कर्म अनवतप्ते महाह्रदे ॥

कोलितवर्गस्तृतीयः ॥३॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं [शोभितमिदमवोचन् । व्याकृता आयुष्मता कोलितेन स्वका कर्मप्लोतिः] । अथायुष्मानपि शोभितः स्वकां कर्मप्लोतिं व्याकरोतु । [अथायुष्मान् शोभितो भिक्षुसंघस्य पुरस्तात् स्वकां कर्मप्लोतिं व्याकरोति] ।

संघाराममहं गत्वापश्यं [1]चोक्षमथाङ्गनम् ।
[सम्मार्जन्या मया पश्चाद् रजस्तस्य परिष्कृतम्] ।
निष्क्लेशः स्यामित्यवोचं यथेदं चोक्षमङ्गनम् ॥
तेन कुशलमूलेन यत्र यत्रोपपन्नवान् ।
प्रा[सादिको] दर्शनीयश्चाभिरूपो भवाम्यहम् ॥
ततः कर्मविशेषेण [ममायं पश्चिमो भवः ।
पितृभ्यां भूषयित्वाथ नाम्नाहं शोभितः कृतः ॥
ततो जातिमहं कृत्वा ज्ञाति]सङ्घाग्रतस्तदा ।
प्रियो मनापः सर्वेषां ज्ञातीनां सत्कृतः सदा ॥
आराधितः सार्थवाहः संबुद्धोऽय[मनुत्तरः] ।
अर्हत्त्वं च मया प्राप्तं शीतीभूतोऽस्मि निर्वृतः ॥

1 Cf. *Saddharmapuṇḍarīka*, i, st. 39.

यो मे च [प्रणिधिस्तस्य कर्मणा विहितेन हि।
अर्हत्त्वमुपगम्येह वीतक्लेशोऽस्म्यनास्रवः ॥
जम्बुद्वीपमशेषं] पि काशिवस्त्रेण शोधयेत्।
वीतरागस्य यत्वेकं चंक्रमं शोधयेदृषेः ॥
जम्बुद्वीपे च सर्वस्मिन् शोधयेदृषिचंक्रमान्।
यच्च चातुर्दिशि संघे कटीमात्रं विशोधयेत्।
जम्बु[द्वीपे जिनस्तूपं हस्तमात्रञ्च संघकम्] ॥
एतां विशोधितां ज्ञात्वा या मया वेदिता स्वयम्।
सम्मार्ज्य सुगतस्तूपं प्रसादयत मानसम् ॥
तस्मात् प्रजानतां सम्यक्संबुद्धस्य गुणान् बहून्।
कार्यः स्तूपेषु सत्कारो [भविष्यति महाफलः ॥
एतन्मे कुश]लं तस्य कान्तमिष्टं मनोरमम्।
तस्माद् जिनस्य स्तूपेषु पूजां कुर्वीत शोभनाम् ॥
एतद् भदन्ताः परमं पुण्यक्षेत्रमनुत्तमम्।
नहि चित्तप्रसादस्य भवत्यल्पा[पि दक्षिणा।
तथागते च संबुद्धे बुद्धानां श्रावकेषु च ॥
शोभितः स्थविरश्चैवं भि]क्षुसंघाग्रतः स्थितः।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

शोभितवर्गश्चतुर्थः ॥४॥

अथ स्थविरस्थविरा भिक्षवः आयुष्मन्तं सुमनस[मिदमवोचन्। व्याकृतायुष्मता शोभितेन स्वका कर्मप्लोतिः]। इदानीमायुष्मानपि स्वकं कर्म व्याकरोतु।

कर्णे सुमनसं कृत्वा कृत्वा मालां च मूर्धनि।
उद्यानभूमिं निर्यामि वयस्यैः परिवारितः॥
विपश्यिनः स्तूपमहं तत्रापश्यं महामुनेः।
[सर्वैर्महाजनैश्चेममपश्यं बहुसत्कृतम्॥
अथ क्रीडां वयस्यैश्च कृत्वा मा]लां स्वकां स्वकाम्।
तस्मिन्नारोपयन् स्तूपे प्रसन्नेन च चेतसा॥
तानहं तत्र दृष्ट्वाथ जनमन्यं तथा बहु।
कर्णाद् गृहीत्वा कुसुमं स्तूपे आरोपये तदा॥
तेनाहं कुशलमूलेन यत्र [यत्रोपपन्नवान्।
देवभूतो मनुष्यश्च कृतपुण्यो विरोचितः॥
आराधितः] सार्थवाहः संबुद्धोऽयमनुत्तरः।
[अर्हत्त्वं च मया प्राप्तं] शीतीभूतोऽस्मि निर्वृतः॥
एकपुष्पं परित्यज्य वर्षकोटिशतान्यहम्।
देवेषु परिचर्यैव[1] शेषेण परिनिर्वृतः॥
स चे [भदन्त संबुद्धगुणानाप्तुमिहेच्छसि।
पुनः पुनरुपासीथाः सुप्रसन्ने]न चेतसा॥
तस्मात् प्रजानतामस्य [संबुद्धस्य गुणान् बहून्]।
कार्यः स्तूपेषु सत्कारो भविष्यति महाफलः॥

1 Tib. 517a. 1. 7: ལྷ་ཡི་ ཡོངས་ སྤྱོད་ ནས །

न हि चित्तप्रसादस्य स्वल्पा भवति दक्षिणा ।
तथागते च संबुद्धे बुद्धानां श्रावकेषु च ॥
[कुशलस्य फलं तस्य] कान्तमिष्टं मनोरमम् ।
तेन कर्मविपाकेन नास्ति जातु पुनर्भवः[1] ॥
अर्हन्नस्मि हतक्लेशः शीतीभूतोऽस्मि निर्वृतः ।
नाहं पुनर्भवं शय्यां संसारे शयितः क्वचित् ॥
इयं मे पश्चिमा जाति[र्लब्धो मे मानुषो भवः ] ।
मुक्तोऽस्मि सर्वदुःखेभ्य उत्तीर्णो भवसागरात् ॥
इत्येवं सुमनाः स्थविरो भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

सुमनोवर्गः पञ्चमः ॥५॥

[अथ स्थविरस्थविरा भिक्षवः आयुष्मन्तं कोटीविंशमिदमवोचन्। व्याकृता] आयुष्मन् कोटीविंश आयुष्मता सुमनसा स्वका कर्मप्लोतिः। इदानीमायुष्मानपि स्वकां कर्मप्लोतिं [व्याकरोतु]। किमायुष्मता कोटीविंशेन कर्म कृतं यस्य कर्मणो विपाकेन [भगवता आरब्धवीर्याणामग्रयो निर्दिष्टः। स कथयति।

चातुर्दिशस्य] संघस्य मयैकं लयनं कृतम् ।
बन्धुमत्यां प्रवचने राजधान्यां विपश्यिनः ॥
संस्तीर्य लयनस्याहं दूष्यमेतत्तवासृजम् ।
प्रहृष्टचित्तः सुमना अकार्षं प्रणिधिं तदा ॥

1 Tib. 517b, l. 4.

[समाराध्य च संबुद्धमहमत्रोपसम्पदा ।
लप्स्ये चातुर्विधैर्दुःखैर्विहीनम]जरं पदम् ॥
अहमेतेन पुण्येन कल्पान् नवति संसृतः ।
देवभूतो मनुष्यश्च कृतपुण्यो विरोचितः ॥
ततः कर्मविशेषेण पश्चिमेऽस्मिन् समुच्छ्रये ।
श्रेष्ठिनोऽग्रस्य [जातोऽहमेक एव सुतस्तदा ॥
जातमात्रं समाकर्ण्य हृष्टो मे जनकोऽब्रवीत् ।
दास्याम्य]हं कुमारस्य कोटीद्रव्यस्य विंशतिम् ॥
रोमाभूत् पादतलयोर्जाताभूच्चतुरङ्गलाः ।
सुसूक्ष्मा मृदुसंस्पर्शाः शुभास्तूलपिचूपमाः ॥
अतीता नवतिः कल्पा [नाभिजानामि दुर्गतिम् ।
आराधितः सार्थवाहः] संबुद्धोऽयमनुत्तरः ।
अर्हत्त्वं च मया प्राप्तं शीतीभूतोऽस्मि निर्वृतः ॥
अग्रयोऽस्म्यारब्धवीर्याणां निर्दिष्टः सर्वदर्शिना ।
क्षीणास्रवो वान्तदोषः प्राप्तोऽह[मचलं पदम् ॥
कोटीविंशश्च स्थविरो भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं] कर्म अनवतप्ते महाह्रदे ॥

कोटीविंशवर्गः षष्ठः ॥६॥

अथ स्थविरस्थविरा भिक्षवः आयुष्मन्तं वागीशमिदमवोचन् । व्याकृता आयुष्मन् वागीश आयुष्मता कोटीविंशेन स्वका कर्मप्लोतिः । आयुष्मानपि स्वकां कर्मप्लोतिं [व्याकरोतु] । स कथयति ।

नवत्यतीताः कल्पा मे नाभिजानामि दुर्गतिम् ।
देवभूतो मनुष्यश्च [कृत]पुण्यो विरोचितः ॥
अजानानः कुशलमहं केवलान्योन्यदर्शनात्[1] ।
[आगन्तुकानां षष्ठ्या हि क्रियमाणं विपश्यिनः ॥
स्तूपसत्कारमालोक्य गन्धमाल्येन पूजितः ।
पूजयि]त्वा स्तूपे च न विनिपातमहं गतः ॥
कृत्वाल्पकं तु कुशलमनुभूतं सुखं बहु ।
अर्हत्त्वं च मया प्राप्तं शीतीभूतोऽस्मि निर्वृतः ॥
स चेद्धि नाम संबुद्धं ज्ञात्वा[हं सत्करोमीह ।
फलं बहु भवेत् तस्य सत्कारस्य न संशयः[2] ॥
तस्मात् प्रजानतामस्य संबुद्धस्य गुणान् बहून् ]।
स्तूपेषु कार्यः सत्कारो भविष्यति महाफलः ॥
अग्र्योऽस्मि गाथाकाराणां निर्दिष्टः सर्वदर्शिना ।
वागीश [इति विख्यातः] कल्याणप्रतिभानवान् ॥
[वागीशः स्थविरोऽप्येवं भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे] ॥

वागीशवर्गः सप्तमः ॥७॥

अथ स्थविरस्थविरा भिक्षवः आयुष्मन्तं पिण्डोलभरद्वाजमिदमवोचन् । व्याकृता आयुष्मता वागीशेन [स्वका कर्मप्लोतिः । आयुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु ।

1 Tib. 519a, l. 1: ཕན་ཚུན་ལྷ་ལྟུས་དབབ་ཞིག་གིས །

2 Tib. 519a, l. 3.

श्रेष्ठिनस्तनयश्चा]हमीश्वरः पैतृके गृहे ।
अनुरक्षया पितुरहं मिथ्यामानेर्यावर्तिनम् ॥
पितरं भगिनीं भ्रातॄन् दासकर्मकरानपि ।
तर्पयाम्यन्नपानेन [तथापि] पर्यभाषिषम् ॥
मातस[र्येणाभिभूतोऽन्नमदत्त्वासं परुषवाक् ।
तेन क]र्मविपाकेन नरके क्षेपितं बहु ॥
प्रतापने कालसूत्रे दुःखं प्राप्तमनल्पकम् ।
नरकेभ्यस्ततश्च्युत्वा लब्ध्वा वै मानुषं भवम् ॥
तेन कर्मविपाकेन पाषाण[मशनं मम ।
तथैव क्षुत्पिपासाभ्यां दुःखी का]लं करोम्यहम् ॥
इयं मे पश्चिमा जातिर्लब्धो मे मानुषो भवः ।
आराधितः सार्थवाहः संबुद्धोऽयमनुत्तरः ॥
प्रव्रज्या च मया लब्धा शाक्यसिंहस्य शासने ।
[अर्हत्त्वं च मया प्राप्तं शीतीभूतोऽस्मि निर्वृतः ॥
अग्रयोऽस्मि सिंहनादानां निर्दिष्टः सर्वदर्शि]ना ।
सर्वे मे वाहिताः क्लेशा वीतक्लेशोऽस्म्यनास्रवः ॥
इदानीमपि भदन्ताहमेवमृद्धिमतः सतः ।
भविष्यत्युपला एव गुहायां मम भोजनम् ॥
एतद्भदन्त [कुशलं कान्तमिष्टं मनोरमम् ।
पिण्डो]लभरद्वाजः स्थविरो भिक्षुसंघाग्रतः स्थितः ॥
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ।

पिण्डोलभरद्वाजवर्गोऽष्टमः ॥८॥

अथ स्थविरस्थविरा भिक्षवः [आयुष्मन्तं स्वागतमिदमवोचन्। व्याकृता आयुष्मता पिण्डोलभर]द्वाजेन स्वका कर्मप्लोतिः। इदानीमायुष्मानपि स्वागतः स्वकां कर्मप्लोतिं व्याकरोतु। अथायुष्मान् स्वागतस्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति।

वन्धुमत्यां राजधान्यां [जातोऽहं श्रेष्ठिनः सुतः।
बहुधान्यधनोपेतो जनकायसुसंवृतः[1] ॥
नृपाणां सत्कृ]तोऽभूवमथ नैगममन्त्रिणाम्।
[प्रासादिको] दर्शनीयो रूपदर्शनमूर्च्छितः ॥
ततोऽहं रथमारुह्य जनकायपुरस्कृतः।
उद्यानभूमिं निर्यामि सर्वकामसमन्वितः ॥
तत्र चापश्य[मुद्याने श्रमणं संयतेन्द्रियम्।
प्रशान्ताचरणञ्चैव लूहचीवरधारिणम्] ॥
तं चाहं श्रमणं दृष्ट्वा दौर्मनस्य[युतस्तदा]।
अनवद्यं सुमनसं जुगुप्सन् वचसामुना ॥
अयं प्रव्रजितः कस्य दुर्वर्णो घोरदर्शनः।
कुष्ठी गात्रेष्वरुर्गात्रः कृशो धमनिसन्ततः ॥
[उक्त्वा दुर्भाषितं चैवं कर्मणोऽस्य फलेन हि]।
दुर्वर्णो दुःखितोऽहं [च] भवामि नरक[व्रजे][2] ॥
कुष्ठी गात्रेष्वरुर्गात्रः[3] कृशो धमनिसन्ततः।
कपालपाणिर्व्याहारं गणशाटीनिवासितः ॥

1 Tib. 520a, l, 7.

2 Tib. 520b, l. 5:

3 Tib. 520b, l. 5: ཕྱུས་རྨ་ཅན །

संकारकूटशयनोऽलयनोऽथापरायणः ।
येन [चाहारकृत्येन दण्डितोऽहं] जुगुप्सितः[1] ॥
पञ्चजातिशतान्येवं [यत्र यत्रोप]पन्नवान् ।
तत्रैवं क्षुत्पिपासाभ्यां दुःखी कालं करोम्यहम् ॥
दुरागमश्च मे नाम सर्वलोकजुगुप्सितम्[2] ।
अमनापश्च सर्वेषां तदैवासं जुगुप्सितः ॥
[संघाग्रतोऽहं संबुद्धं दे]शयन्तं परं पदम् ।
दृष्ट्वा च जनकायं तं प्राधावं त्वरितं ततः ॥
अप्येवं तत्र पानीयं लभेयं यावदर्थिकम् ।
दृष्ट्वा च जनकायं तं धर्मार्थाय निषण्णकम् ।
निराशः प्रत्यपक्रामं नास्ति [भोजनसम्भवः ॥
... ... ... ... ।
अपि स्वागत] भद्रं ते निषीदेदं तवासनम् ॥
सोऽहं प्रामोद्यमागम्य संप्रगृह्याञ्जलिं ततः ।
शास्तुः पादौ नमस्याहमेकान्ते सन्निषण्णवान् ॥
ततः कारुणिकः शास्ता गौतमो ह्यनुकम्पया[3] ।
कथ[यत्यनुपूर्वां तां कथां सत्यां महा]मुनिः ॥
प्राव्रजयत् कारुणिको गौतमो मेऽनुकम्पया ।
स्वागतश्चेति मे नाम कृतवाँल्लोकनायकः ॥

1 Tib. 520b, l. 6-7.
2 Tib. 521a, l. 2.
3 Tib. 521a, l. 6.

तेजोधातुमसमापत्त्यामग्रं मामभिनिर्दिशेत् ।
इत्येवं स्वागतः [स्थविरो भिक्षुसंघाग्रतः स्थितः]।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

स्वागतवर्गो नवमः ॥९॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं नन्दिकमिदमवोचन्। व्याकृतायुष्मन्नन्दिक आयुष्मता [स्वागतेन स्वका कर्मप्लोतिः। इदानीमायुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु। अथ] आयुष्मान्नन्दिकस्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति।

पुरोत्तमे राजगृहे श्रेष्ठ्यभूवं महाधनः।
दुर्भिक्षे वर्तमाने च ऋषयस्तत्र भोजिताः॥
भुक्त्वा प्रत्येकबुद्धस्तत् शीतीभूतो अनास्रवः।
चित्तमात्सर्यदोषेण पापिकां चिन्तयाम्यहम्[1]॥
कोऽधुनेमं श्रमणकं सप्तवर्षाणि भोजयेत्।
क्राथयित्वा श्वमूत्रेण ततो भक्तमपाचयम्॥
अभोजयमृषिं [तस्मात् कृत्वा कालमनल्पकम्।
समयं दुःखमापन्न]स्तापनेऽथ प्रतापने॥
नरकात् प्रच्युतश्चाहं लब्ध्वा वै मानुषं भवम्।
ग्लानकः परवश्यश्च दुःखीभूतश्चराम्यहम्॥
पञ्चजातिशतान्येवं [यत्र यत्रोपपन्नवान्]।
... . ... ... ... ॥

1 Tib. 521b, l. 6

इयं मे पश्चिमा जातिर्लब्धो मे मानुषो भवः[1] ।
आराधितः सार्थवाहः संबुद्धोऽयमनुत्तरः ॥
प्रव्रज्या च मया लब्धा शाक्यसिंहस्य शासने ।
अर्हत्त्वं च मया प्राप्तं शीतीभूतो[ऽस्मि निर्वृतः] ॥
... ... ... ... ... ।
... ... ... ... ... ॥
[इत्येवं] नन्दिकः स्थविरो भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

नन्दिकवर्गो दशमः[2] ॥१०॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं यशसमिदमवोचन् । व्याकृतायुष्मन् यश आयुष्मता नन्दिकेन स्वका कर्मप्लोतिः । इदानीमायुष्मानपि [स्वकां कर्मप्लोतिं व्याकरोतु । अथायुष्मान् यशास्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति ।

आसमारण्यकऋ[षि]ग्रामं पिण्डार्थमाव्रजम् ।
नारीकुणपमद्राक्षं व्याध्मातकविनीलकम् ॥
योनिशं प्रत्यवेक्ष्याहं पर्यङ्केन निषण्णवान् ।
अशुभां तत्र भावयाम्येकाग्रः सुसमाहितः ॥

1 522a, l 3.

2 Tib. 522a, l. 7: puts here—
སྦྱོར་ནི་འོད་སྲུང་ཤཱ་རིའི་བུ་དང་ནི །
མོའུ་དགལ་བུ་དང་ མཛེས་ལྡན་དང །
སླ་མ་གྲོ་འིན་ངག་དབང་དང །
བསོད་ སྙོམས་ ལེགས་ འོངས་དགར་ ཡོད་དོ ॥

[कुक्षिध्याने निषण्णोऽहं श्रुत्वाशब्दमथोत्थितः] ।
तस्याः कुक्षिस्थमद्राक्षं पुरीषमथ शोणितम् ॥
तं पूतिगन्धमशुचिं प्रक्षरन्तं समन्ततः ।
अन्त्रमन्त्रगुणं वृक्काहृदयं क्लोमकं तथा ॥
खाद्यमानं कृमिशतैः पुनश्चित्तसमाहितः ।
.... .... .... यथैवेदमिदं तथा ॥
ततः समाधेर्व्युत्थाय प्रक्रान्तोऽस्म्याश्रमं प्रति ।
न पिण्डाय तदाचार्षं भुक्तवान् नैव भोजनम् ॥
यदा चाहं पुनर्ग्रामं प्रविशन् भोजनार्थिकः ।
[रूपं मनोहरं दृष्ट्वाभावयं कुणपं] तथा ॥
अन्तः पूर्णममेध्यस्य[1] सर्वमेव जुगुप्सितम् ।
एवं भावयतोऽभीक्ष्णं प्राप्ता मे वीतरागता ॥
ब्राह्मा विहाराश्चत्वार अप्रमाणाः सुभाविताः ।
[ब्रह्मलोकात्ततश्च्युत्वा जातो वाराण]सी पुरे ॥
जातोऽग्र्यश्रेष्ठिनः श्रीमानहं तत्रैकपुत्रकः ।
प्रियो मनापः सर्वेषां निष्ठाप्राप्तश्च सम्पदाम् ॥
दिवा संपरिचर्याहं रात्रौ शय्यामकल्पयम् ।
लघ्वेव तत उत्थाय तत्रा[पश्यं बहुस्त्रियः ।
वीणामृदङ्गमुरजानाकीर्णांश्च समन्ततः ॥
वस्त्रहीनं] लपन्त्यस्ताः सुप्ता विक्षिप्तबाहवः ।
ततो मे पूर्वको हेतुरुदपादि महार्थकः ॥

1 Tib. 523a, l. 2: ཁྲོག་པ་མི་གཙང་བས་གང་བའི །

श्मशानसंज्ञाशु तत आसीदन्तःपुरे मम ।
ततः संवेगमापन्नः प्रशस्तिं कृतवानहम्[1] ॥
उपद्रु[तोऽहमुत्थाय शयनान्निर्गतो गृहात्] ।
त्रिवृण्वन्ति मम द्वारं देवता अथ राक्षसाः ॥
नगरादभिनिष्क्रम्य नदीतीरमुपागतः ।
अपश्यं पारिमे तीरे श्रमणं संवृतेन्द्रियम् ॥
तं चाहं श्रमणं दृष्ट्वा शब्दमुच्चैरुदीरयन् ।
[अथ सोऽदेशयत्तत्र] मां वाचामृतया तदा ॥
एहि [कुमार मा भैषीरिदं ते निरुपद्रुतम् ।
नदीपारमहं तीर्ण उत्सृज्य मणिपादुके ॥
उपसंक्रान्तः कारुणिकं बुद्धमप्रतिपुद्गलम् ।
ततो मां .... .... ....॥
याचे ततोऽहं प्रव्रज्यां दृष्टसत्यो ... ।
[प्राव्रज]यत् कारुणिको गौतमो मेऽनुकम्पया ॥
रात्रौ निवासेन[2] तत उदितेऽस्मिन् दिवाकरे ।
सर्वे ममास्रवाः क्षीणाः शीतीभूतोऽस्मि निर्वृतः ॥
इत्येवं [यशःस्थविरो भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महा]ह्रदे ॥

इति यशःस्थविरस्य वर्गो एकादशः ॥११॥

1 Tib. 523b, l, 1.

2 Tib. 523b, l. 7: མཚན་ཅིག་བོད་ནས།

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं [1]शैवलमिदमवोचन्। व्याकृतायुष्मन् शैवल आयुष्मता यशसा स्वका कर्मप्लोतिः। इदानी[मायुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु। अथ शैवलस्तस्यां वे]लायां स्वकां कर्मप्लोतिं व्याकरोति।

वाराणस्यां नगर्यां वै निर्वृते काश्यपे जिने।
महत्स्तूपं कारितवान् राजा [रत्न]मयं कृकिः॥
अभूवं ज्येष्ठपुत्रोऽहं कृकिराज्ञो यशस्विनः।
प्रथमं च मया ... ... ॥
[देव]भूतो मनुष्यश्च कृतपुण्यो विरोचितः[2]।
भवाम्याढ्यो महाभागस्तासु तासूपपत्तिषु॥
महादानपतिश्चाहं भवामि धनधान्यवान्।
दत्तं दानमनल्पं च पञ्चजातिशतानि मे॥
ब्राह्मणः श्रमणो भिक्षुरेकैकशो अनास्रवः।
सन्तर्पिताः पञ्चशताः सुप्रसन्नेन चेतसा॥
तत् कर्म कृत्वा कुशलमिह पश्चिमके भवे।
आढ्ये शाक्यकुले जातमात्रो वाचमभाषि यत्॥
कश्चिद् धनं वा धान्यं वा ... ... ।
[अहं तृ]प्तिं न गच्छामि तर्पयिष्ये वनीपकान्॥
साधु मे क्षिप्रमाख्यातु कश्चिदस्तीह वो धनम्।
संविग्नमनसोऽभूवंस्ते श्रुत्वा मम भाषितम्॥

1 Tib. དཔལ་སྐྱེད། 2 Tib. 524a, l. 6.

दिशो दिशो विधावन्ति स्थापयित्वा [च मे मातरम्] ।
.... .... .... त्वं ब्रूहि मे लघु ॥
तव पुत्रोऽहमस्यम्ब मानुषोऽस्मि न राक्षसः ।
जातिस्मरो दानपतिर्दानं दातुं सदोत्सहे ॥
अभूदात्तमना माता श्रुत्वा तद्वचनं मम ।
सा समाश्वास्य [मामाह पश्य कोषं बहुधनम् ॥
प्रियो] मनापः सर्वेषां नातृप्यद्दर्शनेन मे ।
जातमात्रस्य मे नित्यमभ्यवर्धत तत् कुलम् ॥
धनधान्यसुवर्णेन दासकर्मकरैरपि ।
शैवलदारको जातो जातमात्रोऽभ्यभाषत ॥
... ... ... ... ।
... ... ... ... ॥
... ... ... ... ।
आराधयित्वा संबुद्धं प्रव्रजित्वानगारिकान् ॥
नाहमृणात् प्रव्रजितो नापि वा जीविकाभयात् ।
षडभिज्ञा मया प्राप्ता प्रव्रज्य श्रद्धया तदा ॥
मनुजै राजभिश्चान्यै ... ... ।
[इति शैवलस्थविरो भिक्षुसंघा]ग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

शैवलवर्गो द्वादशः ॥१२॥

अथ स्थविरस्थविरा भिक्षवः [आयुष्मन्तं वकुल]मिदमवोचन् । आयुष्मता शैवलेन स्वका कर्मप्लोतिर्व्याकृता । इदानी-

मायुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु। [अथायुष्मान् वकुल-स्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति]।

बन्धुमत्यां राजधान्यां गान्धिकोऽहं पुराभवम्।
विपश्यिनः प्रवचने भि[क्षुसंघं निमन्त्रये॥
इच्छामि ग्लानभैषज्यं ... ... ।
... ... ... ... ॥
[दत्तवान् भिक्षु]श्रमणेष्वेकामेकां हरीतकीम्।
कल्पानि त्वेकनवतिं विनिपातो न मेऽभवत॥
पश्य [भैषज्यदानस्य वि]पाकोऽयं महार्थिकः।
अनु[भूतं बहुसुखं कृत्वाल्पं कुशलं मया]॥
इयं मे पश्चिमा जाति[र्लब्धोऽयं मानुषो भवः।
नाभिजानामि शैक्षेहि गृहीतं राष्ट्रपिण्डकम्॥
त्रिरात्रेणैव तिस्रोऽपि विद्याः साक्षातकृता मया।
यापये लूहलूहेन पांसुकूलं च चीवरम्॥
अ ... ... ... ...।
....[ना]भिजानामि तावतकालिकमप्यहम्॥
एतद् भदन्ताः स्मरामि परीत्तं कुशलं कृतम्।
अनुभूतं फलं तस्य कान्तमिष्टं सुखोदयम्॥
इत्येवं वकुलस्थ[विरो भिक्षुसंघाग्रतः स्थितः।
व्याक]रोति स्वकं कर्म अनवतप्ते महाह्रदे॥

[वकुलवर्ग]स्त्रयोदशः॥१३॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं स्थविरस्थविरनामानमिदमवोचन्। व्याकृतायुष्मन् स्थविर आयुष्मता व[कुलेन स्वका कर्मप्लोतिः]। तदिदानीमायुष्मानपि स्वकां [कर्मप्लोतिं व्याकरोतु]। अथ स्थविरस्थविरनामा तस्यां वेलायां स्वकां कर्मप्लोतिं [व्याकरोति]।

चर्मकारोऽहमभवं पूर्वमन्यासु जातिषु।
दुर्भिक्षे चर्मखण्डानि ततः स्वे ··· ॥
[चर्मखण्डं ततः पक्त्वा पिण्डाय] भोजनार्थिकः[1]।
तस्मै चित्तं प्रसाद्याहं दत्तवांश्चर्ममिश्रिकाम्॥
श्रमणः परिभुज्यासौ तत आकाशमुत्थितः।
प्रामोद्यमुपगम्याहं संप्रगृह्याञ्जलिं ततः॥
[अकार्षं प्रणिधिं तत्र यत्र यत्रोपपन्नवान्।
स्थविरै]रीदृशैरेव भवेन्मम समागमः[1]॥
भिक्षुणानेन यो धर्मः स्पृष्टः कायेन निर्मलः।
स्पृशेयं तमहं धर्मं प्रणिधिर्मे तदाभवत्॥
अनुपेतं च वर्णेन गन्धेन च [रसेन च]।
··· ··· ··· ··· ॥
[कृत्वाल्पकं तु कुशलमनुभूतं सुखं बहु।
देव]भूतो मनुष्यश्च कृतपुण्यो विरोचितः॥
इयं मे पश्चिमा जातिर्लब्धो मे मानुषो भवः।
आराधितः सार्थवाहः संबुद्धोऽयमनुत्तरः॥

1 Tib. 526a, l. 5-6.

यश्च प्रणिधिरुत्तम ... ... ।
... ... ... ... ॥
[स्थविरस्थविरश्चैवं भिक्षुसंघाग्रतः स्थितः ।
व्याक]रोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

स्थविरस्थविरनामा स्थविरवर्गश्चतुर्दशमः ॥१४॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तमुरुविल्वकाश्य[प[1]-मिदमवोचन् । आयुष्मन्नुरुविल्व व्याकृता आयुष्मता स्थविर-स्थविरेण स्वका कर्मप्लोतिः । इदानी]मायुष्मन्तोऽपि व्याकुर्वन्तु स्वकां कर्मप्लोतिम् । ते व्याकर्तुमारब्धाः ।

आसंस्त्रयः सार्थवाहा भ्रातरः सहिता वयम् ।
दृष्ट्वा स्तूपं काश्यपस्य विभग्नं शकलीकृतम् ॥
सर्व[पण्यं समादाय स्तूपं संस्थापितं पुनः[2] ।
ते कर्म कुश]लं कृत्वा चिरं स्वर्गेषु मोदिताः ॥
मानुषं[भवमाग]म्य ततो जाता महाकुले ।
अपश्यन्तश्च संबुद्धं प्रव्रजामोऽन्यतीर्थिकान् ॥
अकार्षीत् प्रातिहार्याणि नदीं नैरञ्जनां प्रति ।
[प्रव्रज्यां याचितोऽस्माभिस्तदालोक्य महामुनिः ॥
प्राव्रजयत् कारुणिको गौतमो मेऽनुकम्पया] ।
गयाशीर्षे वयं गत्वा गौतमं शासनं श्रुतम् ।
आरब्धवीर्यैरस्माभिः प्राप्तं निर्वाणमुत्तमम् ॥

1 Tib. 526b. l. 1    2 Tib. 527a, l, 3.

कृत्वेह शास्तुः सत्कारं स्तूपं तदभिवन्द्य च ।
सर्वे वयं प्रव्रजिताः शीतीभूता[श्च निर्वृताः ॥
उरुविल्वादयश्चैवं भिक्षुसंघाग्रतः स्थिताः] ।
व्याकरोन्ति स्वकान् कर्मानिनवतप्ते महाह्रदे ॥

उरुविल्वनदीगयाकाश्यपानां वर्गः पञ्चदशः ॥१५॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं यशसमिदमवोचन् । व्याकृतायुष्मन् [उरुविल्वादिभिः स्वका कर्मप्लोतिः । इदानीमायुष्मानपि स्वकां कर्म]प्लोतिं व्याकरोतु ।

गान्धिकोऽहं पुराभूवं गन्धपण्येषु कोविदः ।
कुमार्यश्च स्त्रियस्तत्र तदा पण्यार्थमागताः ॥
दृष्ट्वा च रूपधारिण्यः स्त्रियस्तत्रा[हमुक्तवान्] ।
... ... ... ... ॥
कृतवान् पाणिसंस्पर्शं[1] परस्त्रीष्वपरीक्षकः ।
तेन कर्मविपाकेन नरकेषूपपन्नवान् ॥
मानुष्यं पुनरागम्य पाणिः शुष्यति दक्षिणः ।
पञ्चजाति[शतान्येवं यत्र यत्रोपपन्नवान्] ॥
... ... ... ... ।
[आराधिश्च संबुद्धः] प्राव्रजं चानगारिकाम्[2] ।
अर्हत्त्वं च मया प्राप्तं शीतीभूतोऽस्मि निर्वृतः ॥
एतद् भदन्ताः स्मरामि यन्मया कुशलं कृतम् ।
अनुभूतं फलं तस्य न हि कर्म प्रण[श्यति] ॥

1 Tib. 527b, l. 6
2 Tib. 528a, l. 1

... ... ... ... ।
[स्त्रियो वा] पुरुषो वापि दुःखां विन्दति वेदनाम् ॥
विसर्जयेत् पारदारमग्निं प्रज्वलितं यथा ।
स्वेषु दारेषु सन्तुष्येद् बुद्धिमान् पण्डितो नरः ॥
पश्यतः परदारेषु यः पुमान[नुरज्यति ।
समाप्नोति] फलं तस्य सोऽनल्पं नरके चिरम् ॥
इयं मे पश्चिमा जातिः प्राप्तं पदमनुत्तरम ।
मुक्तोऽस्मि सर्वदुःखेभ्यः शीतीभूतोऽस्मि निर्वृतः ॥
तस्माद्विमुख ... ... ... ।
... ... ... ... ॥
[इत्येवं स्थविरयशा भिक्षुसंघाग्रतः स्थितः ।
व्याक]रोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

स्थविरयशसो वर्गः षोडशः ॥१६॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं [ज्योतिष्कमिदमवोचन् । व्याकृतायुष्मता यशसा स्वका कर्मप्लोतिः । इदानीमायुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु] । अथायुष्मान् ज्योतिष्कस्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति ।

बन्धुमत्यां राजधान्यां[1] ... ... ।
... ... ... ... ॥
... ... ... ... ।
... महीपालो नरर्षभमहं तदा ॥

1 Tib. 528b, l. 5.

उत्तरोत्तरभक्तेन सगणं तर्पयामहं ।
त्रैमास्यं भोजितो बुद्धो ··· ··· ॥
··· ··· ··· ··· ।
··· ··· भोजनाच्छादनं तथा ॥
एकैकस्य तदा भिक्षोर्दानं दत्तमनल्पकम्[1] ।
हेमजालप्रतिच्छन्ना ह ··· ··· ॥
··· ··· ··· ··· ।
··· ··· ··· ··· ॥
··· ··· ··· पश्चिमः कृतः ।
सन्तर्पितो महाराज्ञा ऋषिश्रेष्ठो विनायकः ॥
ततोऽस्मि चिन्तामापन्नो दृष्ट्वा आसनसंपदः ।
स्यान्मे खाद्यं च भोज्यं च ··· ॥
··· ··· ··· ··· ।
··· ··· ··· ··· ॥
··· मब्रवीच्छक्रो महायशा भवाम्यहम् ।
तेन निर्मितमुद्यानं शुभं दिव्यं मनोरमम् ॥
प्रज्ञप्तमासनं दिव्यं दिव्यान्याच्छादनानि च ।
ततो विपश्यिनो मया ··· ··· ॥
··· ··· ··· ··· ।
··· ··· ··· स्वलंकृताः ॥

1 Tib. 529a, l. 2

भिक्षोश्छत्रं धारयन्ति तदेकैकस्य मूर्धनि ।
ततो दिव्येन भक्तेन तर्पितः स विनायकः ॥
दिव्यैराच्छादितो वस्त्रैर्मुनिः सश्रावको [मया] ।
... ... ... ... ॥
कृतपुण्यो विरोचेयं देवेषु मनुजेषु च[1] ।
कृत्वा महर्षेः सत्कारं श्रीमतो वै विपश्यिनः ॥
इयं मे पश्चिमा जातिर्जाता राजगृहे वयम् ।
बिम्बिसारस्य ... ... ॥
... ... अमात्यानां नैगमानां च सर्वशः ।
दिव्यैः कामैरहं नित्यमस्मिन् सन्तर्पितोऽभवम् ॥
मनुष्यभूतोऽन्वभवं दिव्यान् कामान् मनोरमान् ।
अनुत्तरः सार्थवाहः स्तुतो बुद्धो महामुनिः ॥
... ... संप्रायां येनासौ भगवान् मुनिः ।
... ... द्योतमुल्कादानं प्रभाकरम् ॥
अवतीर्य रथात् पद्भ्यामुपसंक्रान्तवान् मुनिः ।
[सार्थ]वाहं नरादित्यमाराध्य[1] ... ॥
... नुत्तरः शास्ता मामसावनुकम्पया ।
आर्यसत्यान्युपदिशेत् प्रत्यविध्यमहं तदा ॥
अहं तदा कारुणिकं संबुद्धं ... ।
... पुद्गल एहि भिक्षो इत्येव... .... ॥

1 Tib. 529b, l. 3.

तेनाप्रमत्तमनसा दृढवीर्यसमाधिना ।
शिवं निर्वाणममृतं स्पृष्टं स्थानमनुत्तरम् ॥
आराधितः [सार्थवाहः संबुद्धोऽयमनुत्तरः[1] ।
अर्हत्त्वं च मया प्राप्तं शीतीभूतोऽस्मि निर्वृतः] ॥
... ... जात्या च मरणेन च ।
शोक ... ... मुक्तोऽस्मि सर्वतः ॥
ज्योतिष्क एवं स्थविरो भिक्षुसङ्घाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाहृदे ॥

[ज्योतिष्कवर्गः सप्तदशः ॥१७॥]

[अथ स्थविरस्थविरा भिक्षवो राष्ट्रपालमिद]मवोचन् । व्याकृतायुष्मन्[1] राष्ट्रपाल आयुष्मता ज्योतिष्केण स्वका कर्मप्लोतिः । इदानीमायुष्मानपि राष्ट्रपालो व्याकरोतु स्वकां कर्मप्लोतिम् । अथायुष्मान् राष्ट्रपाल[स्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति] ।

... ... ... वर्धनः ।
राज्ञः कृकेरहं पुत्रः कनीयानभवं तदा ॥
अकारयं महत् स्तूपं श्रीमतः काश्यपस्य वै ।
तस्यैव च पितुश्छत्रदण्डकमन्व[धारयम्][2] ॥
[तत्]कर्म कृत्वा कुशलं यत्र यत्रोपपन्नवान् ।
देवभूतो मनुष्य[श्च] कृतपुण्यो विरोचितः ॥

1 Tib. 530a. l. 7 2 Tib. 530b, l. 6.

इयं मे पश्चिमा जातिर्जातोऽहं स्थूलकोष्ठके ।
... ... ... ... ॥
... ... पक्षेऽहं तथा जनपदेष्वपि[1] ।
प्रासादिको दर्शनीयः स्वभिरूपः सुसंस्थितः ॥
मानुष्यकाभी रिद्धिभिः सर्वकामसमर्पितः ।
प्रियो म ... ... ... ॥
[स]र्वाशयानां कुशलः शास्ता मेऽप्रतिपुद्गलः[2] ।
प्रतिक्षिप्तं मे प्राव्रज्यं स विदित्वाशयं मम ॥
न बुद्धो अननुमतं मातापित्रा [प्रयच्छति] ।
गेहमागम्य संप्रार्थ्य मातापि]त्रोरथोऽब्रुवम् ॥
ताताम्बाद्यनुजानीत प्रव्रजिष्येऽनगारिकाम् ।
माता पिता च मे श्रुत्वा जातौ [दुर्मनसौ तदा] ॥
... ... ... ... ।
[श्रुत्वा चैतन्मया प्रोक्तं ना]नुज्ञास्यथ मां यदि ।
षड्रात्रं मुक्तिमाकाङ्क्षमनाहारः स्थितोऽभवम् ॥
... ... ... ... ।
... ... ... मृतेन करिष्यथ ॥
सचेदभिरमेतायं प्रव्रज्यायां हि वः सुतः ।
एवं ... ... ... ॥
... ... ... ... ।
अन्यत्र मातापितरोः कान्या पुत्राद् गतिर्भवेत् ॥

1 Tib. 531a, l. 1. 2 Tib. 531a, l. 5.

माता पिता च मे प्राह वयस्याः प्रिय ... ।
... ... ... ... ॥
[माता पि]ता च मे प्राह सचेत् प्रव्रजितो भवान् ।
करोति दर्शनं भूयो गच्छ प्रव्रज पुत्रक[1] ॥
साध्वित्यहं... ... ... ।
... ... ... ... ॥
ततोऽहं प्रव्रजित्वेह व्यहरं शास्तृशासने ।
सर्वसंयोजनं क्षीणमास्रवाणि हतानि मे ॥
... ... ... ... ।
[अर्हत्त्वं च मया]प्राप्तं शीतीभूतोऽस्मि निर्वृतः ॥
प्रसाद्य मानसं तस्मान्महाकारुणिके जिने ।
स्तूपे कुरुत सत्कारं विमोक्ष्यथ महाभये ॥
[स्थविरो राष्ट्रपालोऽसौ भिक्षुसंघाग्रतः स्थितः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे] ॥

राष्ट्रपालवर्गोऽष्टादशमः ॥१८॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं स्वातिमिदमवोचन् । व्याकृतायुष्मन्[1] स्वाते [आयुष्मता राष्ट्रपालेन] स्वका कर्मप्लोतिः । इदानीमायुष्मानपि स्वकां कर्मप्लोतिं [व्याकरोतु] । अथायुष्मान स्वातिस्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति ।

अहं राजगृहेऽभूवमग्रयः श्रेष्ठी महाधनः ।
ऋषीनभोजयं सर्वानेकैकं च कुले कुले[2] ॥

1 Tib. 531b, l. 7.
2 Tib. 532b, l. 2.

याद्दशं च स्वयं भक्तमात्मार्थे पच्यते मदा।
देयं ताद्दशमेवैषामेकैकस्य ... ... ॥
... ... ... प्रतिरूपकम्।
भक्तं पञ्चशता याद्दक् ... ॥
भक्तं ताद्दशमेवाहं तस्य भिक्षोः प्रदत्तवान्।
ततो मे तत्र मात्सर्यमुदपादि सुदारुणम्॥
... ... ... .... कुतः।
पुनर्भिक्षुमिमं लेभा ... ... ॥
भविष्यत्यतिमात्रोऽयं व्ययः पञ्चशतानि मे।
यत्त्वहं श्रमणस्यास्य मरणाय पराक्रमम्॥
कु ... ... ... ।
भोजनेन सह प्रादाम[श्वमूल] ... ॥
तस्मिंश्च भुक्तमात्रेऽस्य व्याधिर्दारुणमुत्थितः।
अन्त्राण्यन्त्रगुणं वृक्का अधोभागेन निर्गतः॥
का ... ... ... ।
... ... श्रेष्ठी अवधीद् य इमं मुनिम्।
... ... ... मनास्रवम्॥
समन्ताज् ज्ञातयः क्रुद्धा अवध्यायन्ति तांस्ततः।
बहुपुण्यं प्रसूतं ते यदयं घाति[तो मुनिः[1]]॥
... ... [देशि]तो अत्ययं ततः।
क्षमापित्वा ततः [सर्वं प्रतिदे]श्यात्ययं ततः॥

1 Tib. 533a. l. 4,

सहस्रार्धेन भक्तेन तर्पयामि सभक्तितः ।
ततपापं देशयित्वाहं क्षमापित्वा च तानृषीन् ॥
... ... ... ... ।
[य]था मुक्ता इमे सर्वे तथा मुच्येय [बन्धनात्] ॥
मा दरिद्रेषु गेहेषु जन्म मेऽभूत् कदाचन ।
मा मे कदाचिन्मात्सर्यं समुत्पद्येत चेतसि ॥
प्रत्येकबुद्धं हत ... ... ।
... ... वेदये दुःखवेदनाम् ॥
मानुष्यं पुनरागम्य क्षिप्रं कालं करोम्यहम् ।
महाधने भवाम्याढ्यो लोकसत्कृतपूजितः ॥
पतद्भिरान्त्र ... ... ।
... ... रागः सर्वसमुद्धृतः ॥
यदा चाप्यनुपादाय निर्वाणं मे भविष्यति ।
अन्त्राण्यन्तगुणा वृक्षा चैवं च निपतिष्यति ॥
य ... ... ... ।
... ... ... ... ॥
... ... स्वातिभिक्षुर्महर्द्धिकः ।
व्याकरोति स्वकं कर्म अनवतप्ते महाह्रदे ॥

स्वातिवर्ग एकोनविंशतिमः[1] ॥१९॥

[अथ स्थविरस्थविरा भिक्षवो जङ्घाकाश्यपमिदमवोचन् । व्याकृता जङ्घाका]श्यप स्वातिना भिक्षुणा स्वका कर्मप्लोतिः ।

1 Tib. 534a, l. 1,

इदानीमायुष्मानपि जङ्घाकाश्यपो व्याकरोतु स्वकां कर्मप्लोतिम् । अथायुष्मान् [जङ्घाकाश्यप]स्तस्यां वेलायां स्वकां कर्मप्लोतिं [व्याकरोति] ।

[निमन्त्रितं सप्तवर्षमस्माभिर्भिक्षुसंघ]कम् ।
ग्रामेण वै समस्तेन दुर्भिक्षे वर्त्तमानके ॥
आगतो मम भागेन तत्रैकः शी … … ।
… … … … ॥
… … … … ।
एवं विचिन्तयित्वाहमकार्षं पापकां मतिम् ॥
किमस्याहं प्रदास्यामि भिक्षोर्भक्तमक[र्मणः] ।
… … … … ॥
[संघा]ते तपने श्चैव दुःखां विन्दामि वेदनाम् ।
नरकात् प्रच्युतश्चाहं यत्र यत्रोपपन्नवान् ।
कृ[1] … … … … ।
[सत्कृताराधितश्चैव संबुद्धोऽयमनुत्तरः ॥
इयं मे पश्चिमा जातिर्नास्ति जातु पुनर्भवः ।
प्रव्रज्य श्रद्धया चैवमास्रवा निहता मया ॥
अभिज्ञाः षण्मया स्पृष्टाः प्राप्तमर्हत्त्वमुत्तमम् ।
… … … .. ॥
… … … … ।
… … [यदा क्ला]न्तो भवाम्यहम् ॥

1 Tib. 534b, l. 1.

जङ्घाकाश्यप गोत्रेण कर्मनामा महर्द्धिकः ।
व्याकरोति स्वकं [कर्म] अनवतप्ते [महाह्रदे] ॥

जङ्घाकाश्यपवर्गो विंशतितमः ॥२०॥

अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं [2]चूडपन्थकमिदमवोचन्। व्याकृतायुष्मन् चूडपन्थक आयुष्मता [जङ्घाकाश्यपेन स्वका कर्मप्लोतिः। इदानीमायुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु। अथायुष्मान् चूडपन्थकः स्वकां कर्मप्लोतिं व्याकरोति]।

[अहं सू]करिकोऽभूवं पूर्वमन्यासु जातिषु ।
बध्वा मुखे सूकरका नदीतीरमतारयम् ॥
नदीमध्यमहं प्राप्य ... ... ... ।
... ... ... ... ॥
... स्म ऋषयः समागत्यानुकम्पया ।
ते माममोदयंस्तत्र ततः प्रव्राजयन्ति माम्[1] ॥
प्रासङ्गिके ... ... .... ।
... ... ... ... ॥
[आराधि]तश्च संबुद्धः प्राव्रजं चानगारिकाम् ।
संमोहतन्द्रारहित उद्देशं नाध्यगामहम् ॥
त्रिभिर्मासैर्भदन्तेमां मय ... ... ।
... धावतेमं संसारं दीर्घं कल्पमनल्पकम्[2] ॥

1 Tib. 535a, l. 4.  2 Tib. 535b, l 1

संमुखं लोकनाथस्य व्याकरोच्चूडपन्थकः ।
कृष्णाशुक्लानि कर्माणि अन[वतप्ते महाह्रदे] ॥

चूडपन्थकवर्ग एकविंशतितमः ॥२१॥

[ अथ स्थविरस्थविरा भिक्षव आयुष्मन्तं बहुश्रुतमि]दम-वोचन् । व्याकृतायुष्मन् चूडपन्थकेन स्वका कर्मप्लोतिः । इदानीमायुष्मानपि स्वकां कर्मप्लोतिं व्याकरोतु । [अथायुष्मान् बहुश्रुतस्तस्यां वेलायां स्वकां कर्मप्लोतिं व्याकरोति] ।

... ... ... [श्रमण]कोऽभवम् ।
बहुश्रुतस्त्रिपिटकश्चाभूवं ... ... ॥
वाचयामि अहं भिक्षून् न धर्मं देशयामि वा ।
जानीयुर्भिक्षवो मान्ये मादृशं[1]... ... ॥
... ... ... ... ।
... ... ... ... ।
न प्रकाशयसे धर्मं नह्येतत्तव शोभनम् ॥
ततो मनसि ... ... ।
... ... ... .. ॥
... ... ... ... ।
... ... ... सर्यं च विनोद्य तम् ॥
पर्षत्स्वदेशयं धर्मं सत्त ... ... ।
... ... ... ... ॥

1 Tib. 535b, l. 5.

... ... ... समर्पितः ।
देवलोकात्ततश्च्युत्वा लब्धो मे मानुषो भवः ॥
शाक्यराजकुले जातो ... ... पदान् ।
कुलाकुलाश्च पुरुषाः प्राव्रज[न्ननगारिकाम् ॥
न]चाप्यहं तु प्रव्रज्यां कामभोगसमर्पितः ।
ममैव चानुकम्पार्थं संबुद्धो ... ... ॥
[सप्तव]र्षाण्यहं तावद् दानं दास्याम्यनल्पकम् ।
... ... वर्षाणामहमत्ययात् ॥
ततश्च प्रव्रजिष्यामि वरप्र ... ... ।
... ... ... ... ॥
वृद्धस्य गौरवेणाहं वचनं न प्रतिक्षिपेत् ।
सप्ताहेन भदन्ताहं प्रव्रजिष्येऽनुकम्पकः ॥
दत्त्वा च दानं सप्ताहं ... ... .... ।
... ... ... त्तमः ॥
अचिन्तयित्वा जनतां प्राव्रज्यायामिनिष्क्रमेत् ।
श्रद्धया प्रव्रजित्वा च युक्तोऽहं जिनशासने[1] ॥
वर्षै ... ... ... ।
... ... ... ... ॥
... ... ... गच्छामि नामृतम् ।
ततो मे च व्यपलाप्यमुदपादि महर्द्धिकम् ॥

1 Tib. 536b, l. 5.

गर्ह्योऽहं ज्ञातिसंघस्य भविष्यामि ... ।
... ... ... ... ॥
... गृहीत्वाहं पर्यङ्केन निषण्णवान् ।
ग्रीवायां स्थापितं शस्त्रमथ चित्तं व्यमुच्यत ॥
अखिल ... ... ।
... ... ... ... ॥
... क्षेण प्राप्ता शान्तिरनुत्तमा ।
यतः पुराहमभवं क्लीवः सद्धर्मसत्सरः ॥
फलं तस्य मया प्राप्तं ... ... ।
... ... ... ... ॥
... ... र्मदासो महर्द्धिकः ।
व्याकरोति स्वकं कर्मानवतप्ते महाह्रदे ॥

बहुश्रुतवर्गो द्वाविंशतिमः[1] ॥२२॥

1 Tib. 537a, l. 6. Several leaves after this are lost. The missing leaves correspond to Tib. 537b to 560b.

....एवेनोद्यच्छमानेन घटमानेन व्यायच्छमानेन सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। [1]किं भदन्त भगवता कर्म कृतम्।

भरद्वाजेनापि पठता स्वाध्यायवता त्रीणि पिटकान्यधीतानि। त्रिपिटः संवृत्तो धार्मकथिको युक्तमुक्तप्रतिभानः। यावत्तेनान्यतमो गृहपतिरन्वावर्तितः। तेन तमुद्दिश्य सर्वोपकरणसंपन्नो विहारः कारितः। ततस्तेन भ्रातुर्वसिष्ठस्य सन्दिष्टम्। आगच्छ एकध्ये प्रतिवसामः। स श्रुत्वा आगतः। ततस्तेन गृहपतिना दृष्टः शान्तेर्यापथः कायप्रासादिकश्चित्तप्रासादिकश्च। स तं दृष्ट्वाभिप्रसन्नः। ततः प्रसादजातेन प्रणीतेनाहारेण संतर्प्य महार्हेण वस्त्रयुगेनाच्छादितः। ततो भरद्वाजस्य ईर्ष्या समुत्पन्ना। अहमस्य सर्वत्र पूर्वंगमो नाहमनेन कदाचिद्वस्त्रेणाच्छादितः। एष त्वचिराभ्यागत एव वस्त्रेणाच्छादित इति स भ्रातुर्वसिष्ठस्य रन्ध्रान्वेषी संवृत्तः। तेनासौ संलक्षितश्चिन्तयति। ईर्ष्याप्रकृतिरयम्। यद्यस्मै एतद्वस्त्रयुगं [न] दास्यामि भूयस्या मात्रया अप्रसादं प्रवेदयिष्यतीति। तेन तस्मै दत्तम्। तथाप्यसौ रन्ध्रान्वेषणपरस्तिष्ठत्येव। यावत्तस्य गृहपतेः प्रेष्यदारिका तं विहारमागत्यागत्य कर्म करोति सा भरद्वाजेनोच्यते। दारिके अहं तवैतद्वस्त्रयुगमनुप्रयच्छामि। त्वया मम वचनं कर्तव्यमिति। सा कथयति। आर्य किं मया करणीयम्। त्वमेतद् वस्त्रयुगं प्रावृत्य गृहे परिकर्म कुरु। यदि गृहपतिः पृच्छेत् कुतस्तवैतद्वस्त्रयुगमिति। वक्तव्यः आर्य वसिष्ठेन मे दत्तमिति। यदि पृच्छेत् किमर्थमिति।

1 Tib. 561a, l. 2.

वक्तव्यः आर्य एतदपि प्रष्टव्यम्। किमर्थं पुरुषाः स्त्रीणां [प्रय]च्छन्तीति। ततस्तया यथासंदिष्टं सर्वमनुष्ठितम्। ततस्तेन गृहपतिना वसिष्ठस्यान्तिके अप्रसादः प्रवेदितः। असत्कारभीरवस्ते महात्मानः। स उत्थाय प्रक्रान्तः। किं मन्यध्वे भिक्षवः। योऽसौ भरद्वाजः अहमेव स तेन कालेन तेन समयेन। यन्मयाहं[ह्यसत्कृतोऽ]भ्याख्यानेनाभ्याख्यातः ततस्तस्य कर्मणो विपाकेन बहूनि वर्षाणि पूर्ववन्नरकेषु पक्वः यावदेतर्ह्यप्यहमभिसंबुद्धबोधिः सुन्दरिकया प्रव्राजिकया अभूतेनाभ्याख्यातः।

किं भदन्त भगवता कर्म कृतम्। यस्य कर्मणो विपाकेन चंचामाणविकयाभूतेनाभ्याख्यातः। भगवानाह। तथागतेनैवैतानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतानि उपचितानि साधारणान्यसाधारणानि च लब्धसंभाराणि। पूर्ववद् यावत् फलन्ति खलु देहिनाम्[1]। कतमानि साधारणानि।

भूतपूर्वं भिक्षवो वाराणस्यामन्यतमो ब्राह्मणो वेदवेदाङ्गपारगः पञ्चानां माणवकशतानां ब्राह्मणानां मन्त्रान् [ वाचयति ] वाराणसीनिवासिनो जनकायस्यातीव सत्कृतो गुरूकृतो मानितः पूजितोऽर्हन् संमतः। यावदन्यतमः पंचाभिज्ञ ऋषिर्जनपदचारिकां चरन् [वाराणसी]मनुप्राप्तः। वाराणसीनिवासिना जनकायेन दृष्टः प्रासादिकश्च। दृष्ट्वा च पुनः सर्वजनकायोऽभिप्रसन्नः। यस्य यद्दातव्यं कर्तव्यं वा पारलौकिकं स तस्मै अनुप्रयच्छति। ततस्तस्य लाभसत्कारोऽन्तर्हितः। तस्य ऋषेरन्तिके ईर्ष्याभिनिविष्ट-

1 See above. p. 30 n.

बुद्धिर्माणवकानामन्वयते। माणवका अपि तु कामभोग्येष इति। तेऽपि कथयन्ति। एवमेतदुपाध्याय कामभोग्येवैष नायमृषिरिति। ततः स रथ्यावीथीचत्वरशृङ्गाटकेषु ब्राह्मणगृहपतिकुलेषु चारा-चयन्ति। किन्तर्हि। कामभोगीति श्रुत्वा महाजनकायेन अप्रसादः प्रवेदितः। असत्कारभीरुरसौ वाराणस्याः प्रक्रान्तः। किं मन्यध्वे भिक्षवो योऽसौ ब्राह्मणोऽहं स तेन कालेन तेन समयेन। यानि तानि पंचमाणवकशतानि एवैतानि पंचभिक्षुशतानि। यन्मयाभ्याख्यातस्तस्य कर्मणो विपाकेन पूर्ववद् यावन्नरकेषु पक्वः। तेनैव कर्मावशेषेण एतर्ह्यपि संबुद्धबोधिश्चंचामाणविकया अभूतेनाभ्याख्यातः सार्धं पञ्चभिर्भिक्षुशतैः। इदं साधारणं कर्म।[1]

कतरदसाधारणम्। भूतपूर्वं भिक्षवो वाराणस्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं चेति विस्तरेण। तेन खलु समयेन भद्रा नाम रूपाजीविनी प्रतिवसति। मृणालश्च नाम धूर्तपुरुषः। तेन तस्या वस्त्रालंकारमनुप्रेषितं परिचारणाय। सा तद्वस्त्रालंकारं प्रावृता। अन्यतमश्च पुरुषः पञ्चकार्षापण-शतान्यादाय उपस्थितः। कथयति। भद्रे आगच्छ परिचारयाव इति। सा संलक्षयति। यदि गमिष्यामि पञ्च कार्षापणशतानि न लप्स्ये। अदाक्षिण्यं[2] चैतत् गृहागतं प्रत्याख्याय अन्यत्र गमन-मिति। तया प्रेष्यदारिका उक्ता। गच्छ मृणालस्य कथय आर्या कथयति न तावदहं सज्जा पश्चादागमिष्यामीति। तया

1 Tib. Vol. ཁ ends here.

2 Tib. vol. ག leaf 2a, l. 4: གཡོ་ག་མ་ཡང་མར་ཡང་དགུར།

तस्मै गत्वा आरोचितम्। सोऽपि पुरुषो बहुकरणीयस्तां परिचार्य प्रथम एव यामे प्रक्रान्तः। सा संलक्षयति। महती वेला [वर्त]ते। शक्ष्याम्यहं तस्यापि चित्तग्राहं कर्तुमिति। तया पुनरप्यसौ दारिकाभिहिता। गच्छ मृणालस्यारोचय। आर्या सज्जा संवृत्ता। कथय कतरदुद्यानमागच्छत्विति। तया तस्मै गत्वा आरोचितम्। स कथयति। क्षणेन तवार्या सज्जा क्षणेन न सज्जेति। सा दारिका तस्याः सान्तरा। तया समाख्यातम्। आर्यपुत्र नासौ सज्जा। किन्तर्हि। त्वदीयेन वस्त्रालंकारेण अन्येन पुरुषेण सार्धं परिचारितमिति। तस्य यत्कामरागपर्यवस्थानं तद्विगतम्। व्यापादपर्यवस्थानं समुत्पन्नम्। संजातामर्षः कथयति। दारिके भद्राया गत्वा कथय अमुकमुद्यानं गच्छेति। तया गत्वा भद्राया आरोचितम्। सा तदुद्यानं गता। मृणालेन धूर्तक-पुरुषेणोक्ता। युक्तं नाम तव मदीयेन वस्त्रालंकारेण अन्येन पुरुषेण सार्धं परिचरितुमिति। सा कथयति। आर्यपुत्र अस्ति एव ममापराधः। किन्तु नित्यापराधो मातृग्रामः क्षमस्वेति। ततस्तेन संजातामर्षेण निष्कोशमसिं कृत्वा जीविताद् व्यपरोपिता। ततस्तया प्रेष्यदारिकया महान् कोलाहलशब्दः कृतः। आर्या प्रघातिता आर्या प्रघातितेति श्रुत्वा महाजनकायः प्रधावितो यावत् तस्मिन्नुद्याने सुरुचिर्नाम प्रत्येकबुद्धो ध्यायति। ततोऽसौ मृणालो धूर्तपुरुषः संत्रस्तो रुधिरम्रक्षितमसिं सुरुचेः प्रत्येक-बुद्धस्य पुरस्ताच्छोरयित्वा तस्यैव महाजनकायस्य मध्यं प्रविष्टः। महाजनकायश्च रुधिरम्रक्षितमसिं दृष्ट्वा अनेन प्रव्रजितेन भद्रा

जीविताद् व्यपरोपिता । ततस्तं प्रत्येकबुद्धं संजातामर्षाः कथयन्ति । भोः प्रव्रजित ऋषिध्वजं धारयसि । ईदृशं नाम करोषीति । स कथयति । किं कृतम् । ते कथयन्ति । भद्रया ते सार्धं परिचारितम् । सा जीविताद् व्यपरोपितेति । स कथयति । शान्तं नाहमस्य कर्मणः कारीति । स शान्तवाद्यपि तेन महाजनकायेन पश्चाद्बाहुगाढबन्धनबद्धो राज्ञ उपनामितः । देवानेन प्रव्रजितेन भद्रया सार्धं परिचरितम् । सा जीविताद् व्यपरोपितेति । अपरीक्षका हि राजानः । कथयति । यद्येवं गच्छत घातयत । [1]परित्यक्तोऽयं मया प्रव्रजित इति । ततोऽसौ करवीरमालावसक्तकण्ठगुणो नीलाम्बरवसनैः पुरुषैरुद्यतशस्त्रैः संपरिवारितो रथ्यावीथिचत्वरशृङ्गाटकेष्वनुश्राव्यमानो नगरादुद्यानाभिमुखो नीयते । ततो मृणालस्य धूर्तपुरुषस्य बुद्धिरुत्पन्ना अयं तपस्वी प्रव्रजित अदूष्यनपकारी अभूतेनाभ्याख्यातः । सोऽयमिदानीं प्रघात्यते । न मम प्रतिरूपं स्यात् । यदहमप्युपेक्षेय । इति विदित्वा परावृत्य[2] राज्ञः सकाशमुपसंक्रान्तः पादयोर्निपत्य कथयति । देव नायं प्रव्रजितोऽस्य कर्मणः कारी मयैतत् पापकं कर्म कृतम् । मुच्यतामयं प्रव्रजित इति । किं मन्यध्वे भिक्षवः । योऽसौ मृणालो नाम धूर्तः अहं स तेन कालेन तेन समयेन । यन्मया प्रत्येकबुद्धोऽभूतेनाभ्याख्यातस्तस्याहं कर्मणो विपाकेन बहूनि वर्षाणि पूर्ववद् यावन्नरकेषु पक्वः । तेन च

1 Tib. vol. ག་ 3b, l. 7: ངས་ སྤངས་ ཀྱིས །

2 Tib. 4a, l. 4: སླར་ ལོག་སྟེ །

कर्मविशेषेण चंचामाणविकया अभूतेनाभ्याख्यातः[1] । इदमसाधारणम् ।

किं भदन्त भगवता कर्म कृतं यस्य कर्मणो विपाकेन वैरंभेषु यवान् परिभुक्तवान् सार्धं भिक्षुद्वयोनैः पञ्चभिर्भिक्षुशतैरायुष्मन् शारिपुत्र-मौद्गल्यायनाभ्यां दिव्या सुधा परिभुक्तेति[2] । भगवानाह । तथागतेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतानि उपचितानि । पूर्ववद्यावत् फलन्ति खलु देहिनाम् । योऽशीतिवर्षसहस्रायुषि प्रजायां विपश्यी नाम शास्ता लोक उत्पन्नः । पूर्ववद्यावत् बुद्धो भगवान् । स जनपदचारिकां चरन् बन्धुमतीराजधानीमनुप्राप्तः । तस्यां बन्धुमत्यामन्यतमो ब्राह्मणः पञ्चमानवकशतानि ब्राह्मणानां मन्त्रान् वाचयति ।

तेन विपश्यी सम्यक्संबुद्धः पञ्चशतपरिवारो दृष्टः । स माण[वकाना]मन्त्रयते । नार्हन्ति भवन्तोऽमी मुण्डकाः श्रमणका दिव्यां सुधामर्हन्ति तु कोटरयवान् परिभोक्तुमिति । तैरभ्यनुमोदितम् । एवमेवैतदुपाध्याय नार्हन्त्येवामी मुण्डकाः श्रमणका दिव्यां सुधां भोक्तुमर्हन्ति तु कोटरयवान् परिभोक्तुमिति । तत्र द्वौ माणवकौ शुक्लौ । तौ कथयतः । उपाध्याय न शोभनमुक्तम् । अर्हन्त्येवामी महात्मानो दिव्यां सुधां परिभोक्तुमिति । किं मन्यध्वे भिक्षवः । योऽसौ पञ्चशतपरिवारो ब्राह्मणः अहमेव स तेन कालेन तेन समयेन । यन्मया विपश्यिनः सम्यक्संबुद्धस्य सश्रावकसंघस्यान्तिके खरं

1 See above, p. 161.

2 See above, p. 46.

वाक्कर्म निश्चारितं तस्य कर्मणो विपाकेन मया बहूनि वर्षाणि बहूनि वर्षशतानि बहूनि वर्षसहस्राणि बहूनि वर्षशतसहस्राणि कोटरयवाः परिभुक्ताः। तेनैव कर्मावशेषेणैतर्ह्यप्यभिसंबुद्धबोधिना वैरम्भेषु कोटरयवाः परिभुक्ताः सार्धं भिक्षुद्वयेनैः पंचभिक्षुशतैः। यौ तौ द्वौ माणवकौ एतौ शारिपुत्रमौद्गल्यायनौ भिक्षू।

किं भदन्त भगवता कर्म कृतं यस्य कर्मणो विपाकेन दुष्करं चरितमिति। भगवानाह तथागतेनैव तानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि पूर्ववद्यावत् फलन्ति खलु देहिनाम्।

भूतपूर्वं भिक्षवो वैभिडिंग्यां[1] ग्रामनिगमे नन्दीपालो घटीकारोऽभूत्। नन्दीपालसूत्रं विस्तरेण यथा मध्यमागमे राजसंयुक्तनिकाये[2]। किं मन्यध्वे भिक्षवः। योऽसावुत्तरो नाम माणवोऽहमेव स तेन कालेन तेन समयेन[3]। यन्मया पुद्गलोऽपवादो दत्तस्तस्य[4] कर्मणो विपाकेन बोधिमूले षड्वर्षं दुष्करं चरितम्। यन्मया बोधिरबोधिताभविष्यत् पुनरपि मया

1 Tib, 5b, l. 4: བེའི་བྲི་ཏིང་ག་ན། Cf. *Majihima Nikāya*, ii, p. 45: Vebhaliṅgam.

2 In Tib. the full story is given in leaves 5b—14b. See Ghaṭikāra sutta in the *Majjhima Nikāya* (81).

3 See Tib. 14b. l. 3.

4 Ms. पुद्गलोऽवबोधितो न बोदितस्तस्य। Tib. 14b, l. 3—4: ངས་ གང་ ཟག་ལ་ སྐུར་གྱི། བྱང་ ཆུབ་ལ་ མ་ཡིན་ པ་ གང་ ཡིན་པ་ དེའི་ ལས་ཀྱི་ etc.

परावृत्य त्रीणि कल्पासंख्येयानि बोधिनिमित्तमात्मा परिखेदितोऽभविष्यत् ।

किं भदन्त भगवता कर्म कृतं यस्य कर्मणो विपाकेनाभिसंबुद्धबोधिरपि भगवान् [मन्दाग्निना[1]] व्याधिना स्पृष्ट इति । भगवानाह तथागतेनैव तानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि पूर्ववद्यावत्फलन्ति खलु देहिनाम् ।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन् कर्वटके वैद्यो बभूव । ततोऽन्यतमस्य गृहपतेः पुत्रः ग्लानः संवृत्तः । तेनासौ वैद्य आहूय पृष्टः । तेन तस्य भैषज्यं दत्तम् । स स्वस्थः संवृत्तः । तेन गृहपतिना तस्याभिसारो [न] दत्तः । यावत्त्रिरप्यसौ गृहपतिपुत्रो ग्लानः संवृत्तः यावत्त्रिरपि तेन स्वस्थीकृतः । न च तेन तस्याभिसारो दत्तः । ततः स वैद्यस्तीव्रेण पर्यवस्थानेनामर्षितः संलक्षयति । अस्य गृहपतिपुत्रस्य मया यावत् त्रिरपि[2] चिकित्सा कृता । न चानेन किंचिदप्युपकृतम् । इदानीं यदि भूयो ग्लान्यं पतति तादृशमस्य भैषज्यं ददामि येनास्यान्त्राणि खण्डखण्डं शीर्यन्ते इति । यावदसौ गृहपतिपुत्रो दैवयोगात्पुनर्ग्लान्यं पतितः । तेन वैद्येन संजातामर्षेण तादृशं तस्य भैषज्यं दत्तं येनान्त्राणि खण्ड[3] .... ।

1 Tib. 14b, l. 6: འཁྲུ་བའི་ སྐྲན །=diarrhoea. 2 Ms. तृरपि

3 After this a few leaves are missing. See Tib. 15a. l. 4. The story is ended in the usual way, viz., that Buddha was the physician and that for this sinful act of his, he suffered long in the hells, and at last even when he became Buddha he suffered from dysentry. The story is followed by two other similar stories about Buddha's past evil acts and his sufferings therefor.

In Tib. 17 a—23 a there is a number of verses dealing with Buddha's greatness; the verses end with the words 'तथागत वर्ग' ।

Buddha returned from the Anavatapta lake to Nagarabindu in Kosala and stopped at Simsāpavana (See Tib. 21a).

....मादिशेदनुकंपामुपादायेति । भगवानाह । समयेनाहं युष्माक नाम्ना दक्षिणामादिशामि । यदि यूयमनेनैव वर्षेण दक्षिणादेशनाकाल उपसंक्रामतेति । ते कथयन्ति । जिह्रीमः कथमागच्छाम इति । अथ भगवांस्तस्यां वेलायां गाथां भाषते[1] ।

अलज्जितव्ये लज्जिनो लज्जितव्ये अलज्जिनः ।
अभये भयदर्शिनो भये चाभयदर्शिनः ।
मिथ्यादृष्टिसमादानात् सत्त्वा गच्छन्ति दुर्गतिम् ॥
अलज्जितव्येऽलज्जिनो लज्जितव्ये च लज्जिनः ।
अभयेऽभयदर्शिनो भये च भयदर्शिनः ।
सम्यग्दृष्टिसमादानात् सत्त्वा गच्छन्ति सद्गतिम् ॥ इति ।

ते कथयन्ति । भगवन्नद्यैवागमिष्याम इति ।

अथ नागरबिन्दवा ब्राह्मणगृहपतयस्तामेव रात्रिं शुचिप्रणीतं खादनीयभोजनीयं पूर्ववद्यावन्नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय । तानि च पञ्च प्रेतशतान्युपसंक्रान्तानि । ततो नागरबिन्दवा ब्राह्मणगृहपतयः प्रेतान् दृष्ट्वा निष्पलायितुमारब्धाः । भगवताभिहिताः । भवन्तः किमर्थं निष्पलायन्ति । ते कथयन्ति । भगवन् एते प्रेता आगच्छन्ति । भगवानाह । आगच्छन्तु युष्माकमेवैते ज्ञातयः । यदि यूयमनुजानीध्वे अहमेषां नाम्ना दक्षिणामादिशेयमिति । ते कथयन्ति । भगवन्ननुजानीमहे[2] । ततो भगवान् पञ्चाङ्गेन स्वरेण तेषां नाम्ना दक्षिणामादेष्टुं प्रवृत्तः ।

1 See Tib. 21a, l. 2. 2 Ms ०नीध्वम्

इतो दानाद्धि यत् पुण्यं तत् प्रेतानुपगच्छतु ।
व्युत्तिष्ठन्तां क्षिप्रमिमे प्रेतलोकात्सुदारुणात् ॥ इति ।
ततोऽभिनिवृत्तं तेषां चीवरं पानभोजनम् ।
शयनं वापि विविधमक्षयं सार्वकालिकम् ॥

ततो नागरबिन्दवान् ब्राह्मणगृहपतीन् धर्म्यया कथया सन्दर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात्प्रक्रान्तः ।

ततो नागरबिन्दवानां ब्राह्मणगृहपतीनां कुतूहलशालायां संनिषण्णानां संनिपतितानामयमेवंरूपोऽभूत् अन्तसमुदाहारः । महेच्छो वत भवन्तः श्रमणो गौतमो महेच्छा वास्य श्रावका इति । अपरे कथयन्ति । अल्पेच्छो भवन्तः श्रमणो गौतम अल्पेच्छा वास्य श्रावका न यथा तीर्थ्या इति । तेन खलु समयेन वैरट्टसिंहो नाम ब्राह्मणस्तस्यामेव पर्षदि सन्निषण्णोऽभूत् सन्निपतितः । अथ वैरट्टसिंहो ब्राह्मणो नागरबिन्दवान् ब्राह्मणगृहपतीनिदमवोचत् । अहं भवतां प्रत्यक्षीकरिष्यामि । अल्पेच्छो वा श्रमणो गौतमो महेच्छो वा अल्पेच्छा वास्य श्रावका महेच्छा वेति[1] । अथ वैरट्टसिंहो ब्राह्मणो येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमिदमवोचत् । अधिवासयतु मे भगवान् गौतमो गुडखादनिकया सार्धं भिक्षुसंघेनेति । अधिवासयति भगवान् वैरट्टसिंहस्य तूष्णींभावेन । अथ वैरट्टसिंहो ब्राह्मणो भगवतस्तूष्णींभावेन अधिवासनं विदित्वा भगवतोऽन्तिकात् प्रक्रान्तः । तत्र भगवान् भिक्षूनामन्त्रयते स्म । अवतारप्रेक्षिणा भिक्षवो वैरट्टसिंहेन

1 The corresponding story in the Pali *Mahāvagga* (I, p. 224) is different.

ब्राह्मणेन बुद्धप्रमुखो भिक्षुसंघो गुडखादनिकया उपनिमन्त्रितः। तद्युष्माकं यो यावत्परिभुंक्ते तेन तावद् ग्रहीतव्यमिति। वैरट्टसिंहब्राह्मणस्य पञ्चगुडस्थालीशतानि भवन्ति। स प्रत्येकं गुडशालाया गुडस्थालीं गृहीत्वा पंचगुडस्थालीशतान्यादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्। निषीदतु भगवान् गौतमः सश्रावकसंघः। सज्जो गुडः। परिभुङ्क्ष्व। अथ भगवान्निष्पादितपाणिपादः[1] पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। ततो वैरट्टसिंहो ब्राह्मणः एकां गुडस्थालीं गृहीत्वा चारयितुमारब्धः। यावद्भगवता तथाधिष्ठिता यथा भिक्षुसंघस्य चारिता। अवशिष्टा पूर्णाऽवस्थिता। ततो वैरट्टसिंहो ब्राह्मणोऽभिप्रसन्नः। ततस्तेन प्रसादजातेन सामन्तकेन शब्दो निश्चारितः। अल्पेच्छो भवन्तः श्रमणो गौतमः। अल्पेच्छाश्चास्य श्रावका इति। ततस्तेन तीर्थ्या उपनिमन्त्रिताः। गुडं परिभुक्तम्। तैरमात्रया गुडो गृहीतः। कैश्चित् खोरकां पूरयित्वा ततो गृहीत्वा च संप्रस्थितम्। ततो वैरट्टसिंहेन ब्राह्मणेनाभिहिताः। यूयमेव मोहपुरुषा महेच्छाः। श्रमणस्तु गौतमः अल्पेच्छः। अल्पेच्छा वास्य श्रावकाः। इत्युक्त्वा स भूयस्या मात्रया भगवत्यभिप्रसन्नो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवता सार्धं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्यैकान्ते न्यषीदत्। अथ वैरट्टसिंहो ब्राह्मणो येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। लभेयाहं भदन्त स्वाख्याते धर्मविनये

1 Tib. 23b, l. 4.

प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति। ततो भगवता एहि—भिक्षुकया आभाषितः। एहि भिक्षो चर ब्रह्मचर्यमिति। पूर्ववद्यावन्नोपस्थितो बुद्धमनोरथेन।

तत्र भगवान् भिक्षूनामन्त्रयते स्म। तस्मादनुजानामि कालेन वाकालेन वा ग्लानेन वाग्लानेन वा गुडः परिभोक्तव्यः। नात्र कौकृत्यं करणीयमिति।

आयुष्मान् वैरट्टसिंहः कुणपदौर्गन्ध्येन चित्तैकाग्रतां नारागयति। भगवान् संलक्षयति। वैरट्टसिंहो भिक्षुश्चरमभविकः किमर्थं सत्यानि न पश्यतीति। संलक्षयति। कुणपदौर्गन्ध्यविहारम्। पूर्ववद् यावत्। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते स्म। गच्छानन्द वैरट्टसिंहस्य भिक्षोर्विहारं गन्धैर्माल्यैर्धूपैश्चूर्णैः संस्कुरु। शयनासनं च धूपय। सुरभिकुसुमोपचितं च पुष्पवितानं वितन्विति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य यावदसौ पिण्डपातं गतस्तावत्तस्य विहारं गत्वा भगवतोपदिष्टेन विधिना सर्वमनुष्ठितवान्।

अथायुष्मान् वैरट्टसिंहः पिण्डपातमटित्वा विहारमागतः। पश्यति दिव्यां विभूतिम्[1]। ततः प्रीतमनाः पिण्डपातं परिभुज्य कृतभक्तकृत्यो बहिर्विहारस्य पादौ प्रक्षाल्य विहारं प्राविशत्। प्रविश्य निषण्णः पर्यङ्कमाभुज्य ऋजुं कायं प्रणिधाय प्रतिमुखां स्मृतिमुपस्थाप्य तस्य सुगन्धं घ्रात्वा चित्तसमाधानमुत्पन्नम्। ततस्तेन सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। पूर्ववद्यावत् अभिवाद्यश्च

1 Tib. 24b, l. 7.

संवृत्तः। तत्र भगवान् भिक्षूनामन्त्रयते स्म। एषोऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां शुभाधिमुक्तानां यदुत वैरट्टसिंहो भिक्षुः। भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्त अन्ये भिक्षवः शुभयाधिमुक्ताः। आयुष्मांस्तु वैरट्टसिंहः शुभयाधिमुक्त इति। भगवानाह।

एष भिक्षवः पञ्च जन्मशतानि निरन्तरं त्रयस्त्रिंशेभ्यो देवेभ्यश्च्युत्वा तेष्वेवोपपन्नः। इदानीं चरमे भवे मनुष्येषूपपन्नः। कुणपगन्धं घ्रात्वा चित्तैकाग्रतां नासादितवान्। सुगन्धं तु घ्रात्वा चित्तसमाधानं प्रतिलभ्य शुभयाधिमुक्तः। यद्यस्यायमुपचारो न कृतोऽभविष्यदूष्मगतमप्यनेन नोत्पादितमभविष्यदिति। तस्मादनुजानामि योऽप्यन्य एवं शुभाधिमुक्तस्तस्याप्येवंरूपानुपूर्वी कर्तव्या। नात्र कौकृत्यं करणीयम्[1]।

अथ भगवान् वृजिषु जनपदेषु चारिकां चरन् वैशालीमनुप्राप्तो वैशाल्यां विहरति मर्कटह्रदतीरे कूटागारशालायाम्। अश्रौषुर्वैशालका ब्राह्मणगृहपतयो भगवान् वृजिषु जनपदेषु चारिकां चरन् वैशालीमनुप्राप्तो वैशाल्यां विहरति मर्कटह्रदतीरे कूटागारशालायामिति। श्रुत्वा च पुनरेकध्ये सन्निपत्य कथयति। भवन्तः श्रूयते भगवान् वृजिषु जनपदेषु चारिकां चरन् वैशालीमनुप्राप्तो वैशाल्यां विहरति मर्कटह्रदतीरे कूटागारशालायामिति। यद्यस्माकमेकैको भगवन्तमुपनिमन्त्र्य भोजयिष्यति भगवान् विप्रक्रमिष्यति। अन्येऽवकाशं न लप्स्यन्ते।

1 Tib. 25b, l. 2

ततक्रियाकारं व्यवस्थापयामो यथा गण एव सम्भूय भगवन्तं भोजयति न त्वेकपुरुष इति। ते क्रियाकारं कृत्वा व्यवस्थिताः।

तेन खलु समयेन वैशाल्यां चत्वारो महापुण्याः प्रतिवसन्ति। धनिको धनिकपत्नी धनिकपुत्रो धनिकस्नुषा च। तेषां दिव्य-मानुष्यश्रीर्गृहे प्रादुर्भूता[1]। तैरसौ क्रियाकारो न श्रुतः। अश्रौषीद् धनिको गृहपतिर्भगवान् वृजिषु जनपदे चारिकां चरन् वैशाली-मनुप्राप्तो वैशाल्यां विहरति मर्कटह्रदतीरे कूटागारशालायामिति। श्रुत्वा च पुनर्वैशाल्या निष्क्रम्य येन भगवांस्तेनोपसंक्रान्तः। पूर्ववद् यावत संप्रहर्ष्य तूष्णीम्। अथ धनिको गृहपतिरुत्थाया-सनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य भग-वन्तमिदमवोचत। अधिवासयतु भगवान्मे श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान् धनिकस्य गृहे तूष्णींभावेन। अथ धनिको गृहपतिर्भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात प्रक्रान्तः।

अथ वैशालका ब्राह्मणगृहपतयो येन भगवांस्तेनोपसंक्रान्ताः। पूर्ववद्यावत अधिवासयतु अस्माकं भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। भगवानाह। निमन्त्रितोऽस्मि वासिष्ठास्तत् प्रथमतरं धनिकेन गृहपतिनेति। ते कथयन्ति। भवन्तो धनिकेन गृहपतिना गणस्य क्रियाकारोऽतिक्रान्त इत्यपरे कथयन्ति।

[1] Tib. 26a, l. 3: ལྷ་དང་མི་རྣམས་ཀྱི་གཡང་བབས་པར་གྱུར་ཏོ།

किमसौ व्यतिक्रमिष्यति। न तेन क्रियाकारः श्रुतः। पुरुषः श्वो भोजयतु। वयं परश्वो भोजयिष्याम इति[1]।

अथायुष्मानानन्दः काल्यमेवोत्थाय पात्रचीवरमादाय येन धनिकस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्य पूर्वेण नगरद्वारेण प्रविष्टः। यावत्पश्यति नासनप्रज्ञप्तिं न भक्तं सज्जीकृतम्। ततो धनिकं गृहपतिमिदमवोचत्। गृहपते त्वं बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्र्याल्पोत्सुकः स्थित इति। स कथयति। किमार्यानन्दैवं कथयसि गृहपते नासनप्रज्ञप्तिं पश्यामि नाप्याहारं सज्जीकृतम्। आर्य कतरेण त्वं द्वारेण प्रविष्टः। गृहपते पूर्वेण नगरद्वारेण। आर्य दक्षिणेन प्रविश। स दक्षिणेन प्रविष्टो यावत् पश्यति दिव्यामासनप्रज्ञप्तिं कृतां दिव्यं चाहारमुपन्वाहृतम्। दृष्ट्वा च पुनः परं विस्मयमापन्नः। अथ धनिको गृहपतिर्भगवतो दूतेन कालमारोचयति। समयो भदन्त सज्जं भक्तम्। अप्येदानीं पूर्ववद् भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय।

अथ धनिकपत्नी उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान् धनिकपत्न्या तूष्णींभावेन। अधिवास्य च धनिकस्य गृहपतेर्धर्मदेशनां कृत्वोत्थायासनात् प्रक्रान्तः। धनिकपत्न्यापि

1 Tib. 26b, l. 7.

भोजनं सज्जीकृतम्। अथायुष्मानानन्दः काल्यमेवोत्थाय पात्रचीवरमादाय येन धनिकस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्य दक्षिणेन द्वारेण प्रविष्टः। नासनप्रज्ञप्तिं पश्यति नाप्याहारं सज्जीकृतम्। दृष्ट्वा च पुनर्धनिकपत्नीमिदमवोचत्। गृहपतिपत्नि बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्र्य किमर्थमित्यल्पोत्सुका तिष्ठसीति नासनप्रज्ञप्तिं नाप्याहारं सज्जीकृतम्। आर्य कतरेण त्वं द्वारेण प्रविष्टः। दक्षिणेन। आर्य पूर्वेण द्वारेण प्रविश। स पूर्वेण प्रविष्टः। यावत्पश्यति शोभनामासनप्रज्ञप्तिं प्रणीतं चाहारमुपन्वाहृतम्। दृष्ट्वा च पुनः परं विस्मयमापन्नः। ततो धनिकपत्नी भगवतो दूतेन कालमारोचयति। समयो भदन्त सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति। पूर्ववद्यावद् धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा पुरस्तान्निषण्णो धर्मश्रवणाय।

अथ धनिकपुत्रः उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयतु भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान् धनिकपुत्रस्य तूष्णींभावेन। अथ भगवान् धनिकपत्न्या धर्मदेशनां कृत्वा प्रक्रान्तः। धनिकपुत्रेणापि शुचिना प्रणीतं खादनीयभोजनीयं समुदानीतम्। अथायुष्मानानन्दः काल्यमेवोत्थाय पात्रचीवरमादाय येन धनिकस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः। उपसंक्रम्य दक्षिणेन द्वारेण प्रविष्टः। नासनप्रज्ञप्तिं पश्यति नाप्याहारं सज्जीकृतम्। दृष्ट्वा

च पुनर्धनिकपुत्रमिदमवोचत्। गृहपतिपुत्र त्वं बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्र्य किमल्पोत्सुकस्तिष्ठसीति। स कथयति। आर्य किमेवं कथयसि। न पश्याम्यासनप्रज्ञप्तिं नाप्याहारं सज्जीकृतम्। आर्य कतरेण त्वं द्वारेण प्रविष्टः। दक्षिणेन। आर्य पश्चिमेन प्रविश। यावदसौ प्रविष्टः। यावत् पश्यति शोभनामासनप्रज्ञप्तिं प्रणीतं चाहारमुपन्वाहृतम्। दृष्ट्वा च पुनः परं विस्मयमापन्नः। ततो धनिकपुत्रो भगवतो दूतेन कालमारोचयति। समयो भदन्त सज्जं भक्तं यस्येदानीं भगवान् कालं मन्यत इति पूर्ववद्यावद् धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय।

अथ धनिकस्नुषा उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान्। धनिकपुत्रस्य धर्मदेशनां कृत्वा प्रक्रान्तः।

अथ वैशालका ब्राह्मणगृहपतयो येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णाः। एकान्तनिषण्णान् वैशालकान् ब्राह्मणगृहपतीन् भगवान् धर्म्यया कथया यावत् समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ वैशालका ब्राह्मणगृहपतयः उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयतु भगवान् त्वस्माकं श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। भगवानाह। निमन्त्रितोऽस्मि वासिष्ठास्तत्प्रथमतरं धनिकस्नुषयेति। ततो वैशालका

ब्राह्मणगृहपतयः क्षुब्धाः कथयन्ति । भवन्तः किं धनिकस्यैकस्य धनमस्ति येन बुद्धप्रमुखं भिक्षुसंघं प्रतिदिनं भोजयति वयमवकाशं न लभामहे । कथमत्र प्रतिपत्तव्यमिति । अपरे कथयन्ति । यदा बुद्धप्रमुखो भिक्षुसंघो भुक्त्वा प्रक्रामति तदास्य गृहादेकैकां शिलामुद्धट्टयाम इति[1] ।

अथायुष्मानानन्दः काल्यमेवोत्थाय पात्रचीवरमादाय येन गृहपतेर्निवेशनं तेनोपसंक्रान्तः । उपसंक्रम्य पश्चिमेन द्वारेण प्रविष्टः । पश्यति नासनप्रज्ञप्तिं नाप्याहारमुपन्वाहृतम् । दृष्ट्वा च पुनर्धनिकस्नुषामिदमवोचत । धनिकस्नुषे बुद्धप्रमुखं भिक्षुसंघमुपनिमन्त्र्य किं त्वमल्पोत्सुका तिष्ठसीति । सा कथयति । मैवं कथयसि । न पश्यामि आसनप्रज्ञप्तिं नाप्याहारं सज्जीकृतम् । आर्य कतरेण त्वं द्वारेण प्रविष्टः । पश्चिमेन । आर्य उत्तरेण प्रविश । स उत्तरेण द्वारेण प्रविष्टः । यावत्पश्यति दिव्यामासनप्रज्ञप्तिं कृतां दिव्यं चाहारमुपन्वाहृतम् । दृष्ट्वा च पुनः परं विस्मयमापन्नः । ततो धनिकस्नुषा भगवतो दूतेन कालमारोचयति । समयो भदन्त सज्जं भक्तम् । यस्येदानीं पूर्ववद् यावत् पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः ।

अथ वैशालका ब्राह्मणगृहपतयः सर्वे संभूय धनिकस्य गृहद्वारे स्थिताः । धनिकं गृहपतिमिदमवोचन् । गृहपते वैशालको गणः क्षुण्णो द्वारे तिष्ठति । गच्छ क्षमयैनम् । मा ते अनर्थं करिष्यतीति ।

1 Tib. 29b, l. 6: དེའི་ ཁྱིམ་ རྡོ་བ་རེ་རེ་ ནས་ བགོགས་ཏེ་ གཞིག་ གོ །

स निर्गत्य क्षमापयितुमारब्धः। ते कथयन्ति। गृहपते किं तवैवैकस्य धनमस्ति येन त्वं प्रतिदिवसं बुद्धप्रमुखं भिक्षुसंघं भोजयसि वयमवकाशं न लभामहे इति[1]। स कथयति। भवन्तो न मया गणस्य क्रियाकारः श्रुतः। तदर्हति गणः क्षन्तुमिति। अपरे कथयन्ति। भवन्तः प्रधानपुरुषोऽयं क्षम्यतामस्येति। तैः क्षान्तम्। स कथयति। यद्येवं प्रविशत। ते गृहं प्रविष्टाः। पश्यन्ति शोभनामासनप्रज्ञप्तिं कृतां प्रणीतं चाहारं समन्वाहृतम्। दृष्ट्वा च पुनः परं विस्मयमापन्नाः कथयन्ति। गृहपते त्वमेवैकोऽर्हसि बुद्धप्रमुखं भिक्षुसंघं भोजयितुं न वयमिति। स तेषां रत्नानुप्रयच्छति। ते न प्रतिगृह्णन्ति। भगवताभिहिताः। प्रतिगृह्णीध्वं दुर्लभान्येतानि रत्नानीति। तैर्गृहीतानि। येन च यादृशं गृहीतं तस्य तादृशमेव वर्णावभासः संवृत्तः। ततो धनिकस्नुषा सुखनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन पूर्ववद् यावद् धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय।

ततो भगवता धनिकस्य धनिकपत्न्या धनिकपुत्रस्य धनिकस्नुषायाश्चाशयानुशयं धातुं प्रकृतिं च विदित्वा चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता। यां श्रुत्वा धनिकेन धनिकपत्न्या धनिकपुत्रेण धनिकस्नुषया च विंशतिशिखरं समुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्-

1 Tib. 30b, l. 3.

कृतम्। ते दृष्टसत्यास्त्रिरुदानमुदानयन्ति पूर्ववद् यावत्। अभिक्रान्ता वयं भगवन्तं शरणं गच्छामो धर्मं च भिक्षुसंघं च। उपासकांश्चास्मान् धारयन्तु यावज्जीवं प्राणोपेतं शरणगतमभिप्रसन्नाः। अथ भगवान् धनिकं धनिकपत्नीं धनिकपुत्रं धनिकस्नुषां च धर्म्यया कथया सन्दर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात् प्रक्रान्तः[1]।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त धनिकेन धनिकपत्न्या धनिकपुत्रेण धनिकस्नुषया च कर्म कृतं यस्य कर्मणो विपाकेन आढ्ये महाधने महाभोगे कुले जाता दिव्यमानुषीं च श्रियं प्रत्यनुभवन्ति। भगवतश्चान्तिके सत्यदर्शनं कृतमिति। भगवानाह। एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययानि ओघवत्प्रत्युपस्थितान्यवश्यंभावीनि। पूर्ववद्यावत् फलन्ति खलु देहिनाम्।

भूतपूर्वं भिक्षवो वाराणस्यामन्यतमो माला[कारः प्रतिवसति। तेन सदृशात् कुलात् कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति।] ... ... ... सोऽपरेण समयेन दरिद्रः संवृत्तः। परमदरिद्रः। तेन सपुत्रकलत्रस्नुषेण ... ... ... ... ... ... [प्रा]वृत्य कुमाराणामुपनयति। मालाकारस्नुषापि तमेव प्रावृत्य राज्ञः स्नुषा ... ... ... ... ... जनपदचारिकां चरन् सूर्यस्यास्तंगमनकालसमये वाराणसीमनुप्राप्तः[2]। ... ... ...

1 See Tib. 31b, l. 4.

2 Tib. 32b, l. 1.

... ... ... प्रसादजातेन पत्न्याः समाख्यातम्। सा हि प्रसन्ना। तया पुत्रस्य [समाख्यातम्]। सोऽपि प्रसन्नः। तेन ... ... ... [रज]न्यां तैरसौ पिण्डकेन प्रतिपादितः। मालाकारः कथयति। भद्रे यो मम पट ... ... ... ... ... [स ते]नाच्छादितः। कायिकी तेषां महात्मनां धर्मदेशना न वाचिकी। ततः स महा[त्मा] ... ... ... ... ... ... ... पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः[1]। यदस्माभिरेवंविधे सद्भूतदक्षिणीये ... ... ... ... ... ... स्तारमारागयेमो मा विरागयेम इति। ततः प्रत्येकबुद्धस्ते[षां] ... ... ... ... ... ... [महात्म]ना दारिद्रमूलानि समुद्धृतानि[2]। तस्य मालाकारस्य यः [दारिद्र]कालो रा[ज्ञे] ... ... ... ... ... ...भूतमाख्यातम्। ततो राज्ञा यथा प्रावृतेनाच्छादितः। एवं मालाकार ... ... ... ... ... .. ... मालाकार एवासौ धनिकस्तेन कालेन तेन समयेन। मालाका[र] ... ... ... ... ... ... [महाभो]गे कुले जाता। दिव्यमानुषी श्रीगृहे प्रादुर्भूता। मम चान्तिके सत्यानि[3] ... ... ... ... ... ... ... त्येवं वो भिक्षवः शिक्षितव्यम्।

1 Tib. 33a, l. 1.

2 Tib. 33a, l. 6.

3 See Tib. 33b, l. 7.

4 Fragruents are reprodaced here without any emendation.

अथ वैशालका ब्राह्मणगृहपतयो[1] भू[यस्या मात्रयाभिप्रसन्ना आसनादुत्थाय येन भगवांस्तेन कृताञ्जलयोऽभिप्रणम्य भगवन्तमिदमवोचन्। अधिवासयतु भगवांस्त्रैमासीं चीवरपिण्डपातशयनासनग्लानप्र]त्ययभैषज्यपरिष्कारैः सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान् वैशा[लिकानां ब्राह्मणगृहपतीनां तूष्णीम्भावेन। वैशालका ब्राह्मणगृहपतयो भगवतस्तूष्णीम्भावेनाधिवासनां विदित्वा आसनादुत्थाय भगवतः पादौ शिरसा वन्दित्वा] प्रक्रान्ताः। अथ वैशालका ब्राह्मणगृहपतयस्तामेव रात्रिं [शुचिप्रणीतं खादनीयभोजनीयं पूर्ववद् यावत् नीचतरमासनं गृहीत्वा भगवतः पुरस्तात् निषण्णो धर्मश्रवणाय। अथ] भगवान् वैशालकान् ब्राह्मणगृहपतीन् धर्म्यया कथया सन्दर्श्य समादाप्य समुत्तेज्य उत्थायासनात् प्रक्रान्तः।.... ....।

[अथ दिवसद्वयोनत्रैमासिकात्ययाद् वैशालकब्राह्मणगृहपतीनां महापरिवारस्य दुर्भिक्षमुत्पन्नम्। तेषां] ज्ञातयो भोजनमिति कृत्वा उपसंक्रामन्ति। तैरुपद्रूयमाणा [ब्राह्मणगृहपतयो भिक्षूणामारोचयन्ति। आर्या दुर्भिक्षमुत्पन्नम्। ज्ञातयो न उपद्रवन्ति। ....अहो आ]र्यकाः प्रतिजागृयुः। वयमुपकरणानि प्रयच्छाम इति। भिक्षवः कथयन्ति। [भगवता नानुज्ञातम्। ते भगवत आरोचयन्ति। भगवानाह। भिक्षूणां भक्तं प्रतिजा]गर्तव्यम्[2]। ते प्रतिजागर्तुमारब्धाः। यावदभ्यवकाशे प्रतिजाग्रति पेयाञ्च।

1 The following eight pages are mainly restorations from Tibetan as the leaf is in fragments.

2 Tib. 35a, l. 2.

[अथ देवो वृष्टः। अभ्यवकाशमकल्पिकमिति ते भगवत आरोचयन्ति। भगवानाह। अभ्यवकाशे न प्रतिजागर्तव्यम्। ते] द्वारकोष्ठके प्रासादे [च प्रतिजाग्रति। भगवानाह। द्वारकोष्ठके प्रासादे च न प्रतिजागर्तव्यम्। तस्मात्तर्हि कल्पिकस्थाने स्थातव्यम्।] भिक्षवो दशेमानि चाकल्पिकानि। [कतमानि दश। अभ्यवकाशद्वारकोष्ठकप्रासादाग्निशालायन्त्रघरराजाङ्गन-देवस्थान-गृहपतिकुटी-भिक्षुणीशालाः। एतानि] शालावस्तूनि येषु भक्तं न प्रतिजागर्तव्यम्। प्रतिजाग्रति सातिसारा भवन्ति।

[उद्दानम्। ... ... ...। श्रावस्त्यां निदानम्। अथान्यतमस्य भिक्षोर्ग्लान्यमुत्पन्नम्। स वैद्यसकाशमुपसंक्रान्तः कथयति। भद्रमुख भैषज्यं व्यपदिश]। तेन रोगनिदानं पृष्ट्वा अभिहितः[1]। आर्य पेयां पिब स्वस्थो भविष्यसीति। स कथयति। [भद्रमुख भगवता नानुज्ञातम्। वैद्यः कथयति। आर्य कारुणिको वः शास्ता स्थानमेतद् विद्यते यदनुज्ञास्यति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति]। भगवानाह। यदि वैद्यः कथयति पेयां पिबेति[2]। [नात्र कौकृत्यं करणीयम्।

भगवानाह। वैद्योपदेशेन पेया पातव्येति। तस्योपस्थापकेन शीतला पेया दत्ता। स वैद्यसकाशं गत्वा] कथयति। भद्रमुख किं तया पेयया [नाहं स्वस्थः। वैद्यः कथयति। आर्य किं त्वया पेया न पीता। स कथयति। पीता। किमुष्णा। शीतलैव।

1 Tib. 35b, l. 3.

2 Tib. 36a, l. 1.

आर्य न शोभनं कृतम्। उष्णीकृत्य पातव्या। भिक्षवो न जानते कुत्र उष्णीकर्तव्या। भगवानाह। तस्मात्तर्हि भिक्षवः कल्पिकशाला संमन्तव्या। भिक्षवो न जानते कीदृगिति। भगवानाह। पञ्च कल्पिकशाला भवन्ति। आरभ्यमाणान्तिका उच्छ्रीयमाणान्तिका गोनिषादिका उद्धृतव]स्तुका संमतिका च[1]।

तत्र [आरभ्यमाणान्तिका कतमा। तद्यथा नवकर्मिको भिक्षुर्यत्र प्रथमतः स्थित्वा संघस्य कल्पिकस्थानमिति कृत्वा वाचयति इदं कल्पिकस्थानमिति। इदमारभ्यमाणान्तिका उच्यते।] तत्र उच्छ्रीयमाणान्तिका [कतमा]। यथापि तन्नवकर्मिको भिक्षुः शिलायामुच्छ्रीयमाणायां तत्र प्रथमतः शिलायां न्यस्यमानायां सामन्तकान् भिक्षूनामन्त्रयते। अवधारयन्तु आयुष्मन्तः [इदं संघस्य कल्पिकस्थानम्। इदमेवोच्छ्रीयमाणान्तिकोच्यते। तत्र गोनिषादिका कतमा। यत्र द्वारान्तस्तद्] गोनिषादिकेति। [तत्र उद्धृतवस्तुका कतमा]। प्रहीणवस्तुका इयमुच्यते। संमतिका कतमा। [यद् द्वाभ्यां संमतं तत् संमतिकेति। भिक्षवो न जानते कथं संमन्तव्यमिति। भगवानाह। यत् स्थानमधिष्ठितमन्तःसीमं बहिर्व्या]मपरिवारमभिमतं संघस्य तत् संमन्तव्यम्। एवं च पुनः संमन्तव्यम्। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य[2] [पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे सन्निषण्णे संनिपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म करणीयम्। शृणोतु भदन्तः

1 *Mahāvagga*, I. p. 239-240: Ussāvanantikaṃ gonisādikaṃ gahapatiṃ sammutin ti.

2 Tib. 37a, l. 1.

संघः। इदं सर्वा]कारपरिनिष्ठितमन्तःसीमं बहिर्व्यामपरिवारं संघस्य कल्पिकशालां संमन्तु। स चेत् संघस्य प्राप्तकालं [क्षमेतानुजानीयात् संघो यत् संघः एतत् कल्पिकस्थानं संमन्यते] इत्येषा ज्ञप्तिः। एवञ्च कर्म कर्तव्यम्। शृणोतु भदन्तः संघः। इदं वस्तु सर्वाकारपरिनिष्ठितमन्तःसीमं बहिर्व्याम[परिवारं संघः कल्पिकस्थानं सं]मन्यते। येषामायुष्मतां क्षमन्ते इदं वस्तु [कल्पिकस्थानं संमन्तु ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवैतद् धारयामि]।

बुद्धो भगवान् वैशाल्यां विहरति मर्कटह्रदतीरे। [वैशाल्यां सिंहः सेनापतिः प्रतिवसति। स ज्ञातिभिराहृतं मांसं परिभुङ्क्ते। यदा भगवतो]ऽन्तिकात् सत्यानि दृष्टानि तदा न परिभुङ्क्ते। आहृतानि तु भिक्षूणां [प्रयच्छति। भिक्षवस्तत्परिभुञ्जते। तीर्थिका अवध्यायन्ति क्षिपन्ति विवाचयन्ति। आयुष्मन्तः सिंहेन सेनापतिना उद्दिश्य कृतं मांसमाहृतम्। तत श्र]मणशाक्यपुत्रीयाणामनुप्रयच्छति। श्रमणशाक्यपुत्रीयैः उद्दिश्य [कृतंमांसं] परि[भुक्तमिति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। त्रीणि चाकल्पिकानि मांसानि न परिभोक्तव्यानीति वदामि। कतमानि त्रीणि। मामुद्दिश्य कृतमिति संमुखं दृष्टमकल्पिकं मांसं न परिभोक्तव्यमिति वदामि। [श्रुतं त्वामुद्दिश्य कृतमिति] अकल्पिकं मासं न परिभोक्तव्यमिति वदामि। स्वयमेवमाकारपरिवितर्क उत्पन्नो भवति। मामुद्दिश्य कृतमिति संचिन्त्य अकल्पिकं मांसं न परिभोक्तव्य-

मिति वदामि। भिक्षवस्त्रीणि कल्पिकानि मांसानि परिभोक्तव्यानीति वदामि। कतमानि त्रीणि। मामुद्दिश्य कृतमिति संमुखमदृष्टं कल्पिकमांसं परिभोक्तव्यमिति वदामि। अश्रुतं त्वामुद्दिश्य कृतमिति कल्पिकमांसं परिभोक्तव्यमिति वदामि। न स्वयमेव पूर्ववद् यावत् कल्पिकं मांसं परिभोक्तव्यमिति वदामि][1]।

श्रावस्त्यां निदानम्[2]। [सकृच्छ्रः कालो वर्तते। भिक्षवः पार्श्वं दत्त्वा तिष्ठन्ति]। ते ब्राह्मणगृहपतयः कथयन्ति। आर्या एकान्तघटके शासने किमर्थं पार्श्वं दत्त्वा तिष्ठथ न कुशलपक्षं प्रतिजागृथेति। [ते कथयन्ति]। सकृच्छ्रः कालो वर्तते पर्याप्तं पिण्डकं नासादयामः। [वयं क्षुधार्ता दुर्बला जाताः। अतः पार्श्वं दत्त्वा स्थिताः। ते कथयन्ति। कस्मात् न प्रतिजागृथ इति]। नानुज्ञातं भगवता। कारुणिको वः शास्ता स्थानमेतद् विद्यते यदनुज्ञास्यति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मात्तर्हि भिक्षवोऽनुजा[नामि। एवंविधे दुर्भिक्षे कृच्छ्रे कान्तारे भिक्षवः प्रतिजागर्तव्यम्। नात्र कौकृत्यं करणीयम्]।

श्रावस्त्यां निदानम्। सकृच्छ्रः कालो वर्तते। भिक्षवः श्राद्धैर्ब्राह्मणगृहपतिभिरुच्यन्ते। आर्या इहैव भक्तकृत्यं कुरुतेति। ते भक्तकृत्यं कृत्वा पूर्वलब्धं [गृहीत्वा विहारं गच्छन्ति दुर्भिक्षकाले भुञ्जिष्याम इति कृत्वा] किन्तु कौकृत्यान्न परिभुञ्जते। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह।

1 Cf. *Mahāvagga*, I, p. 238. See also p. 219.

2 Tib. 38b, l. 1.

तस्मादनुजानामि एवंविधे दुर्भिक्षे कृच्छ्रे कान्तारे आकांक्षता प्राग्गृहीतमिति [कृत्वा प्राग्गृहीतं परिभोक्तव्यम्। नात्र कौकृत्यं करणीयम्।

श्रावस्त्यां निदानम्]। सकृच्छ्रः कालो वर्तते। श्राद्धा ब्राह्मणगृहपतयो भिक्षूनुपनिमन्त्र्य अन्तर्गृहे भोजयन्ति। तेषां तु भक्तानां खाद्यकान्यवशिष्यन्ते। ब्राह्मणगृहपतयः कथयन्ति। [आर्या युष्माकं कृते अधिष्ठितं भक्तमवशिष्यते। एतत प्रगृह्यताम्। ते तद् गृही]त्वा गच्छन्ति। गतास्तमपि आकाङ्क्षन्ति परिभोक्तुम्। कौकृत्यान्न परिभुञ्जते। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि एवंविधे दुर्भिक्षे कृच्छ्रे कान्तारे [एवंविधं दानमिति कृत्वा परिभोक्तव्यम्। नात्र कौकृत्यं करणीयम्।

श्रावस्त्यां निदानम्। सकृच्छ्रः कालो वर्तते]। श्राद्धा ब्राह्मणगृहपतयो भिक्षूनुपनिमन्त्र्य भोजयन्ति। तेषां भुक्तवतां खाद्यकानि किञ्चिदवशिष्यन्ते। भिक्षवः प्रक्रान्ताः[1]। ब्राह्मणगृहपतयः [कथयन्ति। आर्याः सद्य एव प्रक्रान्ताः। खाद्यकान्यवशिष्यन्ते। दुर्लभान्येतानि। गृहीत्वा गच्छ]। तैर्नीतम्। भिक्षवस्तदपि आकाङ्क्षन्ति परिभोक्तुम्। कौकृत्यान्न परिभुञ्जते। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि [एवंविधे दुर्भिक्षे कृच्छ्रे कान्तारे प्राग्दत्तमिति कृत्वा परिभोक्तव्यम्। नात्र कौकृत्यं करणीयमिति][2]।

1 Tib. 39b, l. 1.

2 Cf. *Mahāvagga*. I, p. 238.

श्रावस्त्यां निदानम्। श्राद्धानां ब्राह्मणगृहपतीनामौत्तरापथिकानि वनास्तिकानि फलानि[1] संपद्यन्ते। ते संलक्षयन्ति। दुर्लभान्येतानि[2] [आर्याणां दातव्यानि। भिक्षूणां परिग्रहार्थं दत्तानि। भिक्षवः प्रतिग्रहीतव्यमिति कृत्वा] कौकृत्यान्न परिभुञ्जते। श्राद्धा ब्राह्मणगृहपतयः कथयन्ति। आर्य यदा भगवान् लोके नोत्पन्नस्तदा तीर्थ्या दक्षिणीयाः। इदानीं तु भगवान् लोके उत्पन्न इदानीं भवन्तो दक्षिणीयाः। तस्मादनुकम्पया गृह्णीतेति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामीति। दुर्लभानीति कृत्वा परिभोक्तव्यानि। नात्र कौकृत्यं करणीयम्। [तत्रेमानि वनास्तिकानि। द्राक्षादाडिम्बतिन्दुक....]।

श्रावस्त्यां निदानम्। श्राद्धा ब्राह्मणगृहपतयो भिक्षूणां [सत्]कुर्वतां प्रवारयतां पुष्करा[स्तिकानि]अनुप्रयच्छन्ति। भिक्षव आकाङ्क्षन्ति किन्तु [कौकृत्यान्न परिभुञ्जते। भिक्षवो भगवत आरोचयन्ति। भगवानाह। दुर्लभानीति कृ]त्वा परिभोक्तव्यानि। नात्र कौकृत्यं करणीयम्। तत्रेमानि पुष्करास्तिकानि। तालूकं मृणालं कुमुदबीजं पद्मबीजं चेति।

श्रावस्त्यां निदानम्[3]। आयुष्मतः शारिपुत्रस्य धातुवै[षम्याद् ग्लान्यमुत्पन्नम्। आयुष्मान् महामौद्गल्यायनः संलक्षय]ति।

1 Cf. *Mahāvagga*, I, p. 238: Vanaṭṭhaṃ pokkharaṭṭhaṃ.

2 Tib. 39b. l. 7.

3 Tib. 40b. l. 4.

बहुशो मया आयुष्मतः शारिपुत्रस्य [स्व]मतेन उपस्थानं कृतम्। न च कदाचिद् वैद्यः पृष्टः यत्तु अहं पृच्छेयमिति। तेन वैद्यः पृष्टः। भद्रमुख आयुष्मतः शारिपुत्रस्य [धातुः कुपितः। भैषज्यं व्यपदिश। स कथयति। आर्य पद्मबीजं] प्रयच्छ स्वस्थो भविष्यति। आयुष्मान् महामौद्गल्यायनः संलक्षयति। न मम प्रतिरूपं स्याद् यदहमायुष्मतः शारिपुत्रस्य कृते न बिसक्षीरेण उपस्थानं कुर्या[मिति। संलक्षितमात्र एव श्रावस्त्या अन्त]र्हितो मन्दाकिन्याः पुष्करिण्यास्तीरे प्रत्यष्ठात् नागराजस्य भवनसमीपे। ततः सुप्रतिष्ठितेन नागराजेन दृष्ट उक्तश्च। किमार्यस्य आगमने [कारणम्। स कथयति। आयुष्मतः शारिपुत्रस्य धातुः कुपितः]। तस्य वैद्येन बिसक्षीरमादिष्टमिति। सुप्रतिष्ठितो नागराजः कथयति। आर्य यद्येवं तिष्ठ तावदिति। स मन्दाकिनीं पुष्करिणीमवतीर्य पुरुषप्रमाणानि बिसक्षीराण्युत्पाट्य उत्पाट्य बि[सक्षीरेणायुष्मतो महामौद्गल्यायनस्य पात्रं पूरितम्]। आयुष्मान् महामौद्गल्यायनोऽस्य बिसानि रुज्यमानानि निरीक्षितुमारब्धः। सुप्रतिष्ठितो नागराजः कथयति। आर्य किमाकाङ्क्षसे बिसानि परिभोक्तुमिति। स तूष्णीमवस्थितः। [स कथयति। आर्य गच्छ। स्वस्ति ते। अथायुष्मान् महामौद्गल्यायनो बिसक्षीरेण] पात्रं पूरयित्वा मन्दाकिन्याः पुष्करिण्यास्तीरेऽन्तर्हितः श्रावस्त्यां प्रत्यष्ठात् जेतवनेऽनाथपिण्डदस्यारामे। तत आयुष्मता शारिपुत्रेण वैद्योपदेशेन बिसक्षीरं परिभुक्तम्। स्वस्थीभूतः ........।

[1]श्रावस्त्यां निदानम्। तेन खलु समयेन भद्रङ्करे नगरे षड् जना महापुण्याः प्रतिवसन्ति। मेण्ढको[2] गृहपतिर्मेण्ढकपत्नी मेण्ढकपुत्रो मेण्ढकस्नुषा मेण्ढकदासो मेण्ढकदासी च। कथं मेण्ढको गृहपति-र्जातो महापुण्यः। स यदि रिक्तकानि कोषकोष्ठागाराणि पश्यति सहदर्शनादेव पूर्यन्ते। एवं मेण्ढको गृहपतिर्जातो महापुण्यः। कथं मेण्ढकपत्नी। सा एकस्यार्थाय स्थालिकां साधयति शतानि सहस्राणि च भुञ्जते। एवं मेण्ढकपत्नी। कथं मेण्ढकपुत्रः। तस्य पञ्चशतिको नकुलकः[3] कट्यां बद्धस्तिष्ठति। स यदि शतं सहस्रं वा परित्यजति तदा पूर्ण एव तिष्ठति न परिक्षीयते। एवं मेण्ढकपुत्रः। कथं मेण्ढकस्नुषा। सा एकस्यार्थाय गन्धं संपादयति शतसहस्रस्य पर्याप्तिर्भवति। एवं मेण्ढकस्नुषा। कथं मेण्ढकदासः। स यदैकं हलसीरं कृषति तदा सप्त सीराः कृष्टा भवन्ति। एवं मेण्ढकदासः। कथं मेण्ढकदासी महापुण्या। सा[4] यदा एकमात्रं प्रतिजागर्ति तदा सप्त मात्राः सम्पद्यन्ते। एवं मेण्ढकदासी महापुण्या[5]।

भगवान् संलक्षयति। अयं मेण्ढको गृहपतिः सपरिवारो भद्रङ्करे नगरे प्रतिवसति। तस्य वैनेयकाल आपन्नः।

1 The first three pages have been supplied from the *Divyāvādāna*, pp. 123ff. See Tib. 42a, l. 7.

2 Ibid. ལུག་ ཅེས །

3 Tib. 42b. l. 3: སྣོད

4 *Divyā.*, p. 124 adds:—यदैकं वस्तु रक्षति तत् सप्तगुणं स्यात्।

5 *Divyā.*, p. 124-125 inserts here several lines: धर्मता etc.

तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। गच्छ त्वमानन्द भिक्षूणामारोचय। तथागतो भिक्षवो भद्रङ्करेषु जनपदेषु चारिकां चरिष्यति यो युष्माकमुत्सहते तथागतेन सार्धं भद्रङ्करेषु जनपदेषु चारिकां चर्तुं स चीवरकाणि प्रतिगृह्णात्विति। एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्य भिक्षूणामारोचयति। तथागत आयुष्मन्तो भद्रङ्करेषु जनपदेषु चारिकां चरिष्यति यो युष्माकमुत्सहते तथागतेन सार्धं भद्रङ्करेषु जनपदेषु चारिकां चरितुं चीवरकाणि प्रतिगृह्णात्विति। एवमायुष्मन्निति। ते भिक्षव आयुष्मत आनन्दस्य प्रतिश्रुत्य पृष्ठतः पृष्ठतः समनुबद्धा गच्छन्ति।

अथ भगवान् दान्तो दान्तपरिवारः शान्तः शान्तपरिवारोऽर्हन्नर्हत्परिवारो[1] जनपदचारिकया भद्रङ्करं नगरं संप्रस्थितः। यदा भगवता श्रावस्त्यां महाप्रतिहार्यं विदर्शितं[2] [तदा तीर्थ्या] निर्भर्त्सिताः[3]। ततः केचिद् भद्रङ्करं नगरं गत्वावस्थिताः। तैः श्रुतं श्रमणो गौतम आगच्छतीति। श्रुत्वा च पुनर्व्यथितास्ते परस्परं कथयन्ति। पूर्वं तावद् वयं श्रमणेन गौतमेन मध्यदेशान्निर्वासिताः। स यदीहागमिष्यति नियतमितोऽपि निर्वासयिष्यति। तदुपायसंविधानं कर्तव्यमिति। ते कुलोपकरणशाला उपसंक्रम्य कथयन्ति। धर्मलाभो धर्मलाभः। ते कथयन्ति। किमिदम्। अवलोकिता

1 *Divyā.* inserts here several lines : आश्वस्त etc.

2 Tib. 43a, l. 7.

3 *Divyā.*, p. 126 adds आनन्दिता देवमनुष्यास्तोषितानि सज्जनहृदयानि। तदा भग्न प्रभावास्तीर्थ्याः प्रत्यन्तान् संश्रिताः। Cf. Tib. 43b, l. 1.

गमिष्यामः। कस्यार्थाय। दृष्टास्माभिर्युष्माकं सम्पत्तिर्यावद् विपत्तिं न पश्यामः। आर्यका अस्माकं विपत्तिर्भविष्यति। भवन्तः श्रमणो गौतमः क्षुराशनिं पातयन्ननेका अपुत्रिका अपतिकाश्च कुर्वन्नागच्छति। आर्या यद्येवं यस्मिन्नेव काले स्थातव्यं तस्मिन्नेव काले अस्माकं परित्यागः क्रियते। तिष्ठत न गन्तव्यम्। ते कथयन्ति। किं वयं न तिष्ठामः। न यूयमस्माकं श्रोष्यथ। आर्याः कथयत श्रोष्यामः[1]। ते कथयन्ति। भद्रङ्करसामन्तकेन सर्वजनकायमुद्वास्य भद्रङ्करं नगरं प्रवासयत शाद्वलानि कृषत स्थण्डिलानि पातयत पुष्पफलवृक्षं छेदयत पानीयानि विषेण दूषयत। ते कथयन्ति। आर्यास्तिष्ठत सर्वमनुतिष्ठाम इति। तेऽवस्थिताः। ततस्तैर्भद्रङ्करनगरसामन्तकेन सर्वं जनकायमुद्वास्य भद्रङ्करं नगरं प्रवासितं शाद्वलानि कृष्टानि स्थण्डिलानि पातितानि पुष्पफलवृक्षाश्छिन्नाः पानीयानि विषेण दूषितानि। ततः शक्रो देवेन्द्रः संलक्षयति[2]। न मम प्रतिरूपं यदहं भगवतोऽसत्कारमध्युपेक्षेयं येन नाम भगवता त्रिभिः कल्पैरसंख्येयैरनेकैर्दुष्करशतसहस्रैः षट्पारिमिताः परिपूर्यानुत्तरज्ञानमधिगतम्। स नाम भगवान् सर्वलोकप्रतिविशिष्टः सर्ववादविजयी शून्ये जनपदे चारिकां चरिष्यति। यन्न्वहं भगवतः सश्रावकसंघस्य सुखस्पर्शार्थायौत्सुक्यमापद्येयमिति[3]। तेन वातवलाहकानां देवपुत्राणामाज्ञा दत्ता। गच्छत भद्रङ्करनगरसामन्तकेन विषपानीयानि शोषयतेति। वर्षवलाहकानां देवपुत्राणामाज्ञा दत्ता। अष्टाङ्गो-

1 Tib. 44a, l. 1.
2 Tib. 44a, l. 5.
3 Tib. 44b, l. 1.

पेतस्य पानीयस्यापूरयतेति। चातुर्महाराजिका देवा उक्ताः। यूयं भद्रङ्कराणां जनपदानां वासयतेति। ततो वातवलाहकैर्देवपुत्रैर्विषदूषितानि पानीयानि शोषितानि। वर्षवलाहकैस्तान्येव कूपोदपानवापीसरस्तडागान्यष्टाङ्गोपेतस्य पानीयस्य पूरितानि। चातुर्महाराजिकैर्देवैर्भ[द्रङ्करनगर]सामन्तकं[1] सर्वमावासितम्। जनपदा ऋद्धा स्फीताश्च संवृत्ताः[2]। तीर्थ्यैर्नगरवासिजनकायसमेतैरवचरकाः प्रेषिताः। पश्यत कीदृशा जनपदा इति। ते गताः पश्यन्ति। अतिशयेन जनपदा ऋद्धस्फीताः। तत आगत्य कथयन्ति। भवन्तो न कदाचिदस्माभिरेवं जनपदा ऋद्धस्फीता दृष्टपूर्वा इति। तीर्थ्याः कथयन्ति। भवन्तो दृष्टो वो यस्तावदचेतनान् भावानन्वावर्तयति स युष्मान् नान्वावर्तयिष्यतीति[3]। तत्कुत एतत्। सर्वथा अवलोकिता भवन्तु भवन्तः। पश्चिमं वो दर्शनं गच्छाम इति। ते कथयन्ति। आर्यास्तिष्ठत। किं श्रमणो गौतमो युष्माकं करोति। सोऽपि प्रव्रजितो यूयमपि प्रव्रजिताः। भिक्षोपजीवितः किमसौ युष्माकं भिक्षां वारयिष्यतीति। तीर्थ्याः कथयन्ति। समयेन तिष्ठामः। यदि यूयं क्रियाकारं कुरुत न केनचित् श्रमणं गौतमं दर्शनायोपसंक्रमितव्यम्। य उपसंक्रामति षष्टिं कार्षापणान् दण्डयितव्य इति[4]। तैः प्रतिज्ञातं क्रियाकारश्च कृतः।

1 Our ms, begins here.

2 Tib. 44b, l. 5.

3 Tib. 45a, l. 1: ཁྱེད་ ཅག་ བསྒྱུར་བར་མི་ བྱེད་པ་དེ་ལྟ་སྟེད་རེ་སྐད །

4 Tib. 45a, l. 5.

ततो भगवाननुपूर्वेण भद्रङ्करं नगरमनुप्राप्तो भद्रङ्करे विहरति दक्षिणायतने। तेन खलु समयेन कापिलवास्तुनो ब्राह्मणदारिका भद्रङ्करे नगरे परिणीता। तया प्राकारस्थया भगवानन्धकारे स्थितो दृष्टः। सा संलक्षयति। अयं भगवान् शाक्यकुलनन्दनः शाक्यकुलाद्राज्यमपहाय प्रव्रजितः। यद्यत्र सोपानं स्यादहं प्रदीपमादायावतरेयमिति। ततो भगवता तस्याश्चेतसा चित्तमाज्ञाय सोपानं निर्मितम्। ततोऽसौ हृष्टतुष्टाः प्रमुदिताः प्रदीपमादाय सोपानेनावतीर्य येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवतः पुरस्तात्प्रदीपं स्थापयित्वा पादौ शिरसा वन्दित्वा निषण्णा धर्मश्रवणाय। ततो भगवता तस्या आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी पूर्ववद्यावच्छरणगतामतिप्रसन्नामिति। अथ भगवांस्तां दारिकामिदमवोचत्। एहि त्वं दारिके येन मेण्ढ[कगृहपतिस्तेनोपसंक्रम। उपसंक्रम्य] एवं मद्वचनादारोग्यय। एवं वद। गृहपते त्वामुद्दिश्याहमिहागतस्त्वं च द्वारं बद्ध्वावस्थितो युक्तमेतदेवं ह्यतिथेः प्रतिपत्तुं यथा त्वं प्रतिपन्न इति। यदि कथय[ति गणेन क्रियाकारः कृत इति। वक्तव्यः। तव पुत्रस्य पञ्चशतिको नकुलकः] कट्यां बद्धस्तिष्ठति। स यदि शतं वा सहस्रं वा व्ययीकरोति पूर्यत एव न परिक्षीयते। न शक्नोषि त्वं षष्टिं कार्षापणान् दत्त्वागन्तुमिति। एवं भदन्तेति सा दारिका भग[वतः प्रतिश्रुत्य संप्रस्थिता। यथापरिज्ञातैव केनचिदेवं] मेण्ढकस्य गृहपतेः सकाशं गता। गत्वा कथयति। गृहपते भगवांस्ते आरोग्ययति। स

कथयति। दारिके वन्दे बुद्धं भगवन्तम्। गृहपते भगवानेवमाह। त्वामे[वाहमुद्दिश्यागतस्त्वं च द्वारं बद्धावस्थितः। युक्तमेतदेव-मतिथेः] प्रतिपत्तुं यथा त्वं प्रतिपन्न इति। स कथयति। दारिके गणेन क्रियाकारः कृतो न केनचित् श्रमणं गौतमं दर्शनायोप-संक्रमितव्यम्। यः उपसंक्रामति स गणेन षष्टिं कार्षापणान् [दण्ड्य इति। गृहपते भगवान् कथयति। तव पुत्रस्य पञ्चशतिको नकुल]कः कट्यां बद्धस्तिष्ठति। स यदि शतं सहस्रं वा व्ययीकरोति पूर्यते एव न परिक्षीयते। न शक्नोषि त्वं षष्टिं कार्षापणान् दत्त्वागन्तुमिति। स संलक्षयति। न कश्चिदेतत्संज्ञा-नीते [नूनं सर्वज्ञः स भगवान्। गच्छामीति। स षष्टिं कार्षापणान् द्वारे स्थापयित्वा ब्राह्मण]दारिकोपदिष्टेन सोपानेनावतीर्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा पुरस्तान्निषण्णः। ततो भगवान् मेण्ढ[कस्य गृहपते-रशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं चतुरार्यसत्यसं]प्रति-वेधिकीं धर्मदेशनां कृतवान् यां श्रुत्वा मेण्ढकेन पूर्ववद्यावत् स्रोत-आपत्तिफलं साक्षात्कृतम्। स दृष्टसत्यः कथयति। भगवन् किमेषोऽपि भद्रङ्करनिवासिजनकाय एवंविधानां धर्माणां लाभीति। भगवानाह। [गृहपते त्वमागम्य भूयसा सर्व एव जनकायो लाभीति। ततो] मेण्ढको गृहपतिर्भगवतः पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात्प्रक्रान्तः। स गृहं गत्वा कार्षापणानां राशिं व्यवस्थाप्य गाथां भाषते।

यो द्रष्टुमिच्छति जिनं जितरागदोषं
निर्द्वन्द्वमप्रतिसमं कनकावदातम्।
सो निश्चलेन हृदयेन सुनिश्चितेन
क्षिप्रं प्रदातु धनमस्य मया प्रदेयम्॥ इति।

जनकायः कथयति। गृहपते श्रेयः श्रमणस्य गौतमस्य दर्शनम्। स कथयति। श्रेयः। ते कथयन्ति। यद्येवं गणेनैव क्रियाकारः कृतो गण एवोत्पाटयतु। कोऽत्र विरोधः। ते क्रियाकारमुत्पाट्य निर्गन्तुमारब्धाः। ततः परस्परं संघट्टेन न शक्नुवन्ति निर्गन्तुमिति। वज्रपाणिना यक्षेण विनयजनानुकम्पया वज्रः क्षिप्तः। प्राकारस्य खण्डः पतितः। अनेकानि प्राणिशतसहस्राणि निर्गतानि कानिचित्कुतूहलजातानि कानिचित्पूर्वकैः कुशलमूलैः संचोद्यमानानि। ततो महाजनकायसन्निपाताद्भगवतो योजनं सामन्तकेन पर्षत्सन्निपतिता। अथ भगवांस्तां पर्षदमवगाह्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषद्यानेकसत्त्वसन्तानकुशलमूलसमारोपिकां धर्मदेशनां कृतवान्। यां श्रुत्वा कैश्चित् स्रोतआपत्तिफलं साक्षात्कृतम्। पूर्ववत् केनचिच्छरणगमनशिक्षापदानि गृहीतानि। भगवतोऽतिचिरं धर्मं देशयित्वा भोजनकालोऽतिक्रान्तः[1]।

मेण्ढको गृहपतिः कथयति। भगवन् भक्तकृत्यं क्रियतामिति। भगवानाह। गृहपते भोजनकालोऽतिक्रान्त इति। स कथयति। भगवन् किमकाले कल्पते। [भगवानाह]। घृतं गुडं

1 Tib. 47b, l. 5.

शर्कराः पानकानि चेति। ततो मेण्ढकेन गृहपतिना शिल्पिन आहूयोक्ताः। भगवन्तोऽकालखाद्यकानि शीघ्रं सज्जीकुरुतेति। तैरपि कथितम्। अकालखाद्यकानि सज्जीकृतानि। गृहपतिना बुद्धप्रमुखो भिक्षुसंघः अकालखाद्यकैरकालपानकैश्च सन्तर्पितः। ततो भगवान् मेण्ढकं गृहपतिं सपरिवारं सत्येषु प्रतिष्ठाप्य तं च कर्वटकनिवासिनं जनकायं यथाभव्यतया विनीय संप्रस्थितः[1]।

मेण्ढकगृहपतिः कथयति[2]। भगवन् कार्षापणः पथ्यादिनिमित्तं गृह्यतामिति। भगवानाह। ग्रहीतव्य इति। उक्तं भगवता कार्षापणो ग्रहीतव्य इति। [भिक्षवो न जानते केन ग्रहीतव्यः कथं चेति।] भगवानाह। कल्पकारेण। कल्पकारो न भवति। भगवानाह। श्रामणेर[के]ण। आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। यत्तदुक्तं भदन्त भगवता श्रामणेरकस्य जातरूपरजतप्रतिग्रहो दशमं शिक्षापदमिति। उक्तं भगवता श्रामणेरकेण ग्रहीतव्य इति। तत्कथम्। भगवानाह। प्रतिग्रहमुदालिन् मया सन्धायोक्तं मा त्वगृह्यम्। तस्मात् श्रामणेरकेणोद्ग्रहीतव्यम्। नो तु प्रतिग्रहः स्वीकर्तव्यः।

मेण्ढको गृहपतिः कथयति। भगवन्गुडौदनं गृह्यतामिति। भगवानाह। ग्रहीतव्यमिति। भिक्षवो न जानते केन ग्रहीतव्यं कथं चेति। भगवानाह। असत्यागारिके श्रामणेरकेण भिक्षुभिर्वा साप्ताहिकमधिष्ठाय स्वयमेव वोढव्यम्। भिक्षवो न जानते कथ-

1. The story of Mendhaka in the *Divyā* (p. 130) ends here.

2 Tib. 48a, l. 5.

मधिष्ठातव्यमिति। भगवानाह। हस्तौ प्रक्षाल्य प्रतिग्राहयित्वा वामे पाणौ प्रतिष्ठाप्य दक्षिणेन पाणिना प्रतिच्छाद्य भिक्षोः पुरतः स्थित्वा वक्तव्यम्[1]। समन्वाहरतायुष्मन्तः। अहमेवंनामा इदं भैषज्यं साप्ताहिकमधिष्ठास्यामि तेषामर्थाय सब्रह्मचारिणां चेति। एवं द्विरपि त्रिरपि। आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति[2]। यदुक्तं भदन्त भगवता गुडः साप्ताहिकोऽधिष्ठातव्य इति। केन परिभोक्तव्यः। पंचभिरुदालिन् पुद्गलैः। अध्वप्रतिपन्नकेन भक्तच्छिन्नकेन ग्लानकेन उपधिवारिकेण नवकर्मिकेन चेति।

भिक्षवो जनपदचारिकां संप्रस्थिताः। तण्डुलानां च सक्तूनां च मध्ये गुडं प्रक्षिपन्ति। [अध्वगा इच्छन्ति] परिभोक्तुम्। कौकृत्येन परिभुञ्जते। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। न लभ्यं भिक्षवस्तेनामिषेणामिषकृत्यं कर्तुम्। यस्तण्डुलेषु प्रक्षिप्तः स प्रस्फोट्य परिभोक्तव्यः। यस्तु सक्तुषु उदकेन द्रवीकृत्य परिभोक्तव्यः। अपरोऽपि द्रवीकृत्य न परिस्फुट एव भवति। भगवानाह। वंशदलिकया निर्लिख्योदकेन प्रक्षालयितव्यः[3]। तथापि न शक्यते निरामिषः कर्तव्यः। भगवानाह। सुशोचितः कृत्वा उदकेन द्रवीकृत्य पातव्यः।

भिक्षवः संशयजाताः[4] सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त मेण्ढकेन मेण्ढकपत्न्या मेण्ढकपुत्रेण मेण्ढकस्नुषया मेण्ढकदासेन मेण्ढकदास्या च [कर्म कृतं येन षड्भिज्ञाता

1 Tib. 48b, l. 6. See above, p. iv-v.
2 Tib. 49a, l. 1.
3 Tib. 49a, l. 7.
4 Cf. *Divyā.*, p. 131 f. Tib. 49b, l. 2.

महापुण्याः संवृत्ताः। भगवतोऽन्तिके सत्यानि दृष्टानि]। भगवान् चैभिराराागितो न विरागित इति। भगवानाह। एभिरेव भिक्षवः कर्माणि कृतानि उपचितानि लब्धसम्भाराणि परिणतप्रत्ययानि पूर्ववद्यावत्फलन्ति खलु [देहिनाम्।

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा] पूर्ववद्यावद् धर्मेण राज्यं कारयति। तेन खलु समयेन वाराणस्यां नगर्यां नैमित्तिकैर्द्वादशवार्षिकी अनावृष्टिर्व्याकृता शलाकावृत्ति[1] महादुर्भिक्षं भविष्यतीति। त्रिविधं दुर्भिक्षं भविष्यति चञ्चु श्वेतास्थि शलाकावृत्ति च। तत्र चञ्चु उच्यते। [समुद्गके तस्मिन्] मनुष्या बीजानि प्रक्षिप्य अनागतसत्त्वापेक्षया स्थापयन्ति। अस्माकमनेन बीजेन मनुष्याः कार्यं करिष्यन्तीति। इदं समुद्गक-सम्बन्धात्[2] चञ्चु उच्यते। श्वेतास्थि कतमत्। तस्मिन् काले मनुष्या अस्थीनि उपसंहृत्य [तावत् क्राथयन्ति यावत् तान्यस्थीनि श्वेतानि संवृत्ता]नीति। ततस्तं पानं पिबन्ति। इदं श्वेतास्थिसंबन्धात् श्वेतास्थि उच्यते। शलाकावृत्ति कतमत्। तस्मिन् काले मनुष्याः खालबिलेभ्यो धान्यगुडकानि शलाकयाकृष्य बहूदकायां स्थाल्यां क्राथयित्वा पिबन्ति। इदं शलाकासंबन्धाच्छलाकावृत्ति उच्यते। राज्ञा ब्रह्मदत्तेन वाराणस्यां घंटावघोषणं कारितम्। शृण्वन्तु भवन्तो वाराणसीनिवासिनः पौरा नैमित्तिकैर्द्वादशवार्षिक्य-

1 Ms. शिलका॰ throughout.

2 Ms. बच्चा Tib. 49b, l. 7: ཕྱུར་ནས་འཚོ་བའི་སྒྲུ་པོ་ ཆེན་པོ།

नावृष्टिर्व्याकृता शलाकावृत्ति दुर्भिक्षं भविष्यति चञ्चु श्वेतास्थि च। येषां द्वादशवार्षिकं भक्तमस्ति तैः स्थातव्यम्। येषां नास्ति ते यथेष्टं गच्छन्तु। विगतदुर्भिक्षतया सुभिक्षे पुनरागमिष्यथ इति। तस्मिंश्च समये वाराणस्यामन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिवारः। विस्तीर्णविशालस्तेन कोष्ठागारिक आहूयोक्तः। भोः पुरुष भविष्यति मे सपरिवारस्य द्वादश-वार्षिकं भक्तमिति। स कथयति। आर्य भविष्यतीति। स तत्रैवावस्थितः। समनन्तरात्तु एव तद्दुर्भिक्षम्। तस्य कोष्ठागारः परिक्षीणः। सर्वश्च परिजनः कालगतः। आत्मना षष्ठो व्यवस्थितः। ततस्तेन गृहपतिना कोषकोष्ठागाराणि शोधयित्वा धान्यप्रस्थ उपसंहृतः। सोऽस्य पत्न्या स्थाल्यां प्रक्षिप्य साधितः। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते। हीन-दीनानुकम्पका प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतरः प्रत्येकबुद्धो जनपदचारिकां चरन् वाराणसीमनु-प्राप्तः। स पूर्वाह्णे निवास्य पात्रचीवरमादाय वाराणसीं पिण्डाय प्रविष्टः। स च गृहपतिः सज्जोऽवस्थितो भोक्तुम्। स च प्रत्येक-बुद्धोऽनुपूर्वेण पिण्डपातमटंस्तस्य गृहमनुप्राप्तः। स तेन गृहपतिना दृष्टः कायप्रासादिकश्चित्तप्रासादिकश्च। दृष्ट्वा च पुनः संलक्षयति। एतदप्यहं परिभुज्य नियतं प्राणैर्वियोक्ष्ये। यत्त्वहं स्वं प्रत्यंशमस्मै प्रव्रजिताय दद्यामिति। तेन भार्याभिहिता। भद्रे यो मम प्रत्यंशस्तमस्मै प्रव्रजितायानुप्रयच्छेति। सा संलक्षयति। मम स्वामी न परिभुङ्क्ते। कथमहं परिभुञ्जे इति। सा कथयति। आर्य-

पुत्र अहमपि स्वं प्रत्यंशमस्मै प्रयच्छामीति। एवं पुत्रेण स्नुषया दासेन दास्या स्वस्वप्रत्यंशाः परित्यक्ताः। ततस्तैः सर्वैः संभूय प्रत्येकबुद्धः पिण्डेन प्रतिपादितः। कायिकी तेषां महात्मनां धर्म-देशना न वाचिकी। स विततपक्ष इव हंसराज उपरिविहायसम-भ्युद्गम्य ज्वलन-तपन-वर्षण-विद्योतन-प्रातिहार्याणि कर्तु-मारब्धः। आशु पृथग्ज़नस्य ऋद्धिरावर्जनकरी। ते मूलनिकृत्ता[1] इव द्रुमाः पादयोर्निपत्य यथेष्टं प्रणिधानं कर्तुमारब्धाः। गृह-पतिः प्रणिधानं कर्तुमारब्धः। यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतोऽनेनाहं कुशलमूलेन यदि रिक्तकानि कोषकोष्ठा-गाराणि पश्यामि सहदर्शनान्मे पूर्णानि स्युः। एवंविधानां च मे धर्माणां लाभी स्याम्। अतः प्रतिविशिष्टतरं शास्तारमाराग-येयं मा विरागयेयमिति। पत्नी प्रणिधानं कर्तुमारब्धा। यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतोऽनेनाहं कुशलमूलेन यद्येक-स्यार्थाय स्थालीं पचेयं सा शतेनापि परिभुज्य सहस्रेणापि न च परिक्षयं गच्छेद् यन्मया प्रयोगो न प्रतिप्रस्रब्धः[2]। एवंविधानां धर्माणां लाभिनी स्याम्। प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। पुत्रः प्रणिधानं कर्तुमारब्धः। यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतोऽनेन मे कुशलमूलेन पंचशतः कमरकः[3] कट्यामुपनिबद्धस्तिष्ठेत्। यदि शतं वा सहस्रं वा ततो व्ययं कुर्यां पूर्णक एव तिष्ठेत्। मा परिक्षयं

1 Tib. 51a, l. 6: ཤིང་ རྩ་བ་ནས་ བཅད་ དེ་འགྱེལ་བ་ བཞིན་དུ།

2 Tib. omits यन्मया प्रयोगो न प्रतिप्रस्रब्धः।

3 *Divyā.* नकुलकः।

गच्छेत्। एवंविधानां च धर्माणां लाभी स्याम्। प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। स्नुषा प्रणिधानं कर्तुमारब्धा। यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतोऽनेनाहं कुशलमूलेन यद्येकस्यार्थाय गन्धान् योजये ते शतस्य वा सहस्रस्य वा उपयुज्येरन् न च परिक्षयं गच्छेयुः। यावत्प्रयोगो न प्रतिप्रस्रब्धः[1]। एवंविधानां धर्माणां लाभिनी स्याम्। प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। दासः प्रणिधानं कर्तुमारब्धः। यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतोऽनेनाहं कुशलमूलेन यद्येकं सीरं[2] कर्षेयं सप्तसीराः कृष्टा भवेयुः। एवंविधानां धर्माणां लाभी स्याम्। प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति। दासी प्रणिधानं कर्तुमारब्धा। यन्मया एवंविधे सद्भूतदक्षिणीये कारः कृतोऽनेनाहं कुशलमूलेन [धान्यानामे]कां मात्रामारभेयं सप्त मात्राः संपद्येरन्। अप्येवंविधानां धर्माणां लाभिनी स्याम्। प्रतिविशिष्ट[तरं चातः शास्तारमारागयेयं मा विरागयेयमिति]प्रणिधानं कृतम्। स च महात्मा प्रत्येकबुद्धस्तेषामनुकम्पां कृत्वा ऋद्ध्या संप्रस्थितः। यावद्राजा ब्रह्मदत्तः उपरिप्रासादतलगतस्तिष्ठति। तस्य ऋद्ध्या गच्छतो राज्ञो ब्रह्मदत्तस्योपरि च्छाया निपतिता। स ऊर्ध्वमुखो निरीक्षितुमारब्धः। पश्यति तत्प्रत्येकबुद्धम्। तस्यैतदभवत्। कस्याप्यनेन महात्मना ऋद्धिमहालाङ्गलैर्दारिद्र्यमूलान्युत्पाटितानीति। बलवत्याशा। ततोऽसौ गृह-

1 Tib. omits यावत् प्रयोगो न प्रतिप्रस्रब्धः।

2 Tib. 52a, l. 4: ཞིང་ རོལ་ཅིག་ རྨོས་ |=क्षेत्रं कर्षेयं।

पतिः कोषकोष्ठागाराणि प्रत्यवेक्षितुमारब्धो [यावत् पूर्णानि पश्यति। स पत्नीमामन्त्रयते। मम ताव]त्प्रणिधानं पूर्णं युष्माकमिदानीं पश्याम इति। ततो दास्या धान्यानामेकां मालामारब्धा परिकर्मयितुम्। सप्त मालाः संपन्नाः। पत्न्या एकस्यार्थाय स्थाली साधिता। सर्वैस्तैः परिभुक्ता तथैवावस्थिता। प्रातिवेश्यैरनेकैश्च प्राणिशत-सहस्रैः परिभुक्ता तथैवावस्थिता। [तथैव पुत्रस्य स्नुषाया दासस्य प्रणिधिः सिद्धा]। ततो गृहपतिना वाराणस्यां घंटावघोषणं कारितम्। यो भवन्तोऽन्नेन अर्थी स आगच्छत्विति। वाराणस्यामुच्चशब्दो महाशब्दो जातः। राज्ञा श्रुतम्। स कथयति। किमेष भवन्त उच्चशब्दो महाशब्द इति। अमात्यैः समाख्यातम्। देवामुकेन गृहपतिना कोषकोष्ठागाराण्युद्घाटितानीति। राजा कथयति। यावत्सर्व एव लोकः कालगतस्तदा तेन गृहपतिना कोषकोष्ठा-गाराण्युद्घाटितानि। आहूयतां भवन्तः स गृहपतिरिति। तैरा-हूतः। ततो राज्ञाभिहितः। गृहपते यदा सर्वलोकः कालगतस्तदा त्वया कोषकोष्ठागाराण्युद्घाटितानीति। देव कस्य कोष्ठागारा-ण्युद्घाटितानि। अपित्वद्यैव मे बीजमुप्तमद्यैव फलितमिति। राजा कथयति। यथाकथम्। स तत्प्रकरणं विस्तरेणारोचयति। राजा कथयति। गृहपते त्वयासौ महात्मा पिण्डकेन प्रतिपादितः। देव मया प्रतिपादितः। स गाथां भाषते।

अहो गुणमयं क्षेत्रं सर्वदोषविवर्जितम्।
यत्रोप्तं बीजमद्यैव अद्यैव फलदायकम्॥ इति।

किं मन्यध्वे भिक्षवो योऽसौ गृहपतिर्गृहपतिपत्नी गृहपतिपुत्रो

गृहपतिदासो गृहपतिदासी च। एष एवासौ मेण्ढको गृहपतिर्मेण्ढकपत्नी मेण्ढकपुत्रो मेण्ढकस्नुषा मेण्ढकदासो मेण्ढकदासी च। य एभिः प्रत्येकबुद्धकारान्कृत्वा प्रणिधानं कृतं तस्य कर्मणो विपाकेन षडपि महापुण्या जाता ममान्तिके सत्यानि दृष्टानि। अहं चैभिः प्रत्येकबुद्धकोटीशतसहस्रेभ्यः प्रतिविशिष्टतरः शास्ता आरागितो न विरागित इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्[1]।

उद्दानम्।

कैनेयः पानमादाय काशीपट्टं च यवागूः।
पापायां[2] खाद्यकं कृत्वा कौकृत्यं विकृतभोजनम्॥

भगवान् उदुमायां[3] विहरत्यावसथे। तेन खलु समयेन कैनेयस्य ऋषेरुदुमायामावसथोऽभूत्। मन्दाकिन्यास्तु पुष्करिण्यास्तीरे दिवाविहारः। भगवान् संलक्षयति। कुत्र त्वहं चतुर्णां लोकपालानां धर्मं देशयेयम्। यत्र मे कैनेय ऋषिरल्पकृच्छ्रेण दमथमागतः। तस्यैतदभवत्। यत्त्वहं मन्दाकिन्याः पुष्करिण्यास्तीरे देशयेयम्। तत्र दमथमेष्यति। तत्र भगवता लौकिकं चित्तमुत्पादितम्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तो

1 Cf. *Divyā.*, p. 135. 2 Tib. 53b, l. 6: སྡིག་ཅན་དུ།

3 Tib. 53b, l. 6: ཨ་དུ་མ་འི་གནས། Cf. Mahāvagga, vi. 37: Ātumā

लौकिकं चित्तमुत्पादयन्ति तस्मिन्समये शक्रब्रह्मादयो देवा भगवतश्चेतसा चित्तमाजानन्ति। वैश्रवणो महाराजः संलक्षयति। किं कारणं भगवता लौकिकं चित्तमुत्पादितम्। पश्यत्यस्माकमेव चतुर्णां लोकपालानां धर्मं देशयितुकाम इति विदित्वा पाञ्चिकस्य महायक्षसेनापतेराज्ञां दत्तवान्। गच्छ पाञ्चिक भगवतोऽर्थाय मन्दाकिन्याः पुष्करिण्यास्तीरे शयनासनप्रज्ञप्तिं कुरु। कैनेयस्यर्षेरेकमारक्षकं स्थापय। महाभूतसन्निपातो भविष्यति मा कश्चिदस्योजो घट्टयिष्यतीति। स मन्दाकिन्याः पुष्करिण्यास्तीरे कैनेयस्यर्षेरारक्षकं स्थापयित्वा शयनासनप्रज्ञप्तिं कर्तुमारब्धः। तत्र महाजनकायस्य कोलाहलशब्दो जातः। ततः कैनेयर्षिः कोलाहलशब्देनोत्थितस्तमारक्षकं पृच्छति। किमेष कोलाहलशब्द इति। स कथयति। शयनासनप्रज्ञप्तिः क्रियते। किं ममार्थाय। न तवार्थाय। अपि तु बुद्धस्य भगवतः। त्वमत्र किं तिष्ठसि। तवैवारक्षकः। किमर्थम्। महाभूतसमागमोऽत्र भविष्यति। मा कश्चिदोजो घट्टयिष्यतीति। स कथयति। तस्य श्रमणस्य गौतमस्य को रक्षां करोतीति। स कथयति। कस्तस्य भगवतो रक्षां करोति। स एव भगवान् सदेवकस्य लोकस्य रक्षां करोतीति श्रुत्वा कैनेयर्षिस्तूष्णीम्।

ततो भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादायोदुमां पिण्डाय प्राविशत्। उदुमां पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद् भक्तपिण्डपातं प्रतिक्रान्तस्तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते उदुमायामन्तर्हितो मन्दाकिन्याः पुष्करिण्यास्तीरे

प्रत्यष्ठात् सार्धं भिक्षुसंघेन। अथ भगवान् पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। ततो धृतराष्ट्रो महाराजोऽनेकगन्धर्व-परिवारोऽनेकगन्धर्वशत-परिवारोऽनेकगन्धर्वसहस्रपरिवारोऽनेक-गन्धर्वशतसहस्रपरिवारो दिव्यानां मणीनामुत्संगं पूरयित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगव[न्तं दिव्यमणिभिरा]कीर्य भगवतः पादौ शिरसा वन्दित्वा पूर्वां दिशं निःसृत्य निषण्णो भग-वन्तं संपुरस्कृत्य भिक्षुसंघं च। विरूढकोऽपि महाराजोऽनेककुम्भाण्ड-परिवारोऽनेककुम्भाण्डशतपरिवारोऽनेककुम्भाण्डसहस्रपरिवारोऽ-नेककुम्भाण्डशतसहस्रपरिवारो दिव्यानां मुक्तानामुत्संगं पूरयित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तं दिव्याभि-र्मुक्ताभिराकीर्य भगवतः पादौ शिरसा वन्दित्वा दक्षिणां दिशं निःसृत्य निषण्णो भगवन्तं संपुरस्कृत्य भिक्षुसंघं च। विरूपाक्षो[ऽपि] महाराजोऽ[नेकनाग-प]रिवारोऽनेकनागशत-परिवारोऽनेकनाग-सहस्रपरिवारोऽनेकनागशतसहस्रपरिवारो दिव्यानामुत्पलपद्म-कुमुदपुण्डरीकमन्दारकाणां पुष्पाणामुत्सङ्गं पूरयित्वा येन भगवां-स्तेनोपसंक्रान्तः। उपसंक्रम्य [भगवन्तं दिव्यैरुत्पल]कुमुदपद्म-पुण्डरीकमन्दारकैः पुष्पैराकीर्य भगवतः पादौ शिरसा वन्दित्वा पश्चिमां दिशं निःसृत्य निषण्णो भगवन्तं संपुरस्कृत्य भिक्षुसंघं च। वैश्रवणोऽपि महाराजोऽनेकयक्षपरिवारोऽनेकयक्षशतपरि-वारोऽनेकयक्षसहस्रपरिवारोऽनेकयक्षशतसहस्रपरिवारो दिव्यस्य हिरण्यस्य सुवर्णस्योत्संगं पूरयित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तं दिव्येन हिरण्यसुवर्णेनाकीर्य भगवतः पादौ

शिरसा वन्दित्वा उत्तरां दिशं निःसृत्य निषण्णो भगवन्तं संपुरस्कृत्य भिक्षुसंघं च। तत्र द्वावार्यजातीयौ धृतराष्ट्रविरूढकश्च। द्वौ दस्युजातीयौ विरूपाक्षो वैश्रवणश्च। अथ भगवत एतदभवत्। स चेदहमार्यया वाचा[1] धर्मं देशयेयं द्वौ चाज्ञास्यतो द्वौ नाज्ञास्यतः। स चेद् दस्युवाचा [2]देशयेयमेवमपि द्वौ चाज्ञास्यतो द्वौ नाज्ञास्यतः। यत्त्वहं द्वयोरार्यया वाचा धर्मं देशयेयम्। द्वयोरपि दस्युवाचेति विदित्वा धृतराष्ट्रं महाराजमामन्त्रयते। इति हि महाराज जीर्णः कायो वेदना शीतीभूता संज्ञा निरुद्धा संस्कारा व्युपशान्ता विज्ञानमस्तंगतम्। एष एवान्तो दुःखस्येति। अस्मिन् खलु धर्मपर्याये भाष्यमाणे धृतराष्ट्रस्य महाराजस्य विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नमनेकेषां च तत्सभागानां गन्धर्वशतसहस्राणाम्।

तत्र भगवान् विरूढकं महाराजमामन्त्रयते। इति हि महाराज [तत्र वो] दृष्टे दृष्टमात्रं भवतु[3] श्रुते चिन्तिते विज्ञाते विज्ञातमात्रम्। अस्मिन् खलु धर्मपर्याये भाष्यमाणे विरूढकस्य महाराजस्य विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नमनेकेषां च तत्सभागानां कुम्भाण्डशतसहस्राणाम्।

1 Tib. 56a, l. 1: དབུས་པའི་ ཚིག་གིས །

2 Tib. 56a, l. 2: འཁོབ་པའི་ ཚིག་གིས །

3 Tib. 56a, l. 7: དེ་ལ་ཁྱོད་ ཀྱིས་མཐོང་བ་ལ་ མཐོང་ བ་ཙམ་དང་ །

तत्र भगवान् विरूपाक्षं महाराजमामन्त्रयते। इति हि महाराज एने मेने दष्फे दण्डष्फे[1] एष एवान्तो दुःखस्येति। अस्मिन् खलु धर्मपर्याये भाष्यमाणे विरूपाक्षस्य महाराजस्य विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नमनेकेषां च तत्सभागानां कुम्भाण्ड-शतसहस्राणाम्।

ततो भगवान् वैश्रवणं महाराजमामन्त्रयते। अत्र ते महा-राज माषा तुषा संशामा सर्वत्र विराठि एष एवान्तो दुःखस्येति। अस्मिन् खलु धर्मपर्याये भाष्यमाणे विरूपाक्षस्य महाराजस्य विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नमनेकेषाञ्च तत्सभागानां यक्षशत-सहस्राणाम्।

भगवान् संलक्षयति। एतर्हि मे परिनिर्वाणकालसमयः प्रत्युपस्थितः। कस्योपन्यस्य शासनं प्रतिनिर्वास्यामि। स चे-द्देवानां देवाः प्रमत्ता रतिबहुला न चिरस्थितिकं भविष्यति। अथ मनुष्याणामल्पायुषो मनुष्या एवमेव न चिरस्थितिकमेव। यत्त्वहं देवानां च मनुष्याणां च काश्यपस्य च भिक्षोः शासनमुपन्यस्य परिनिर्वायामिति विदित्वा धृतराष्ट्रं महाराजमामंत्रयते। मम ते महाराज परिनिर्वृतस्य पूर्वस्यां दिशि शासने आरक्षा करणी-येति। विरूढकं महाराजमामंत्रयते। त्वयापि महाराज दक्षिणस्यां दिशि आरक्षा करणीयेति। विरूपाक्षं महाराजमामं-त्रयते। त्वयापि महाराज पश्चिमस्यां दिशि आरक्षा करणीयेति।

1 Tib. 56b, l. 2: ཨེ་ནེ། མེ་ནེ། དཔ་ཕུ། དཎྜ་ཕེ།

वैश्रवणं महाराजमामंत्रयते। त्वयापि महाराज उत्तरस्यां दिशि-आरक्षा करणीयेति। ततश्चत्वारो महाराजाः प्रमुदितमनसो भगवन्तमिदमवोचन्। एवं भवतु भगवन् यथाज्ञापयति भगवन्। वयमारक्षां करिष्याम इति विदित्वा भगवतः पादौ शिरसा वन्दित्वा दृष्टसत्या भगवतोऽन्तिकात्प्रक्रान्ताः। भगवता-युष्मते महाकाश्यपाय कृत्स्नं शासनमुपन्यस्तम्। आयुष्मांश्चानन्दोऽभिहितः। त्वयाप्यानन्द शासनकार्यकरण औत्सुक्यमापत्तव्य-मिति।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त चतुर्भिर्महाराजैः कर्म कृतं यस्य कर्मणो विपाकेन चत्वारो महाराजाः संवृत्ताः। भगवतश्चान्तिके सत्यदर्शनं कृतमिति। भगवानाह। एभिरेव भिक्षवः पूर्वमन्यासु जातिषु कर्मा[णि] कृतान्युपचितानि लब्धसंभाराणि पूर्ववत्फलन्ति खलु देहिनाम्।

भूतपूर्वं भिक्षवोऽस्मिन्नेव भद्रके कल्पे विंशतिवर्ष-सहस्रायुषि प्रजायां काश्यपो नाम शास्ता लोक उदपादि। पूर्ववद्यावत्शास्ता देवमनुष्याणां बुद्धो भगवान्। तेन खलु समयेन महासमुद्रे द्वौ नागौ प्रतिवसतः श्वासो महाश्वासश्च। कूट-शाल्मल्यामपि द्वौ सुपर्णिनावट्टेश्वरश्चूडेश्वरश्च। यदा श्वास-महाश्वासौ ताभ्यामभिद्रूयेते तदा पातालं प्रविशतः। यावद-परेण समयेन श्वासमहाश्वासाभ्यां काश्यपस्य सम्यक्संबुद्ध-स्यान्तिकाच्छरणगमनशिक्षापदानि गृहीतानि। तौ च सुपर्णिनौ

अभिद्रवितुमारब्धौ न शक्नुवतः। सुमेरुप्रत्याहतपवनसलिले इव प्रतिनिवृत्य कथयतः। भवन्तौ पूर्वमस्माभिर्युवामभिद्रुतौ पातलं प्रविशतः। इदानीं को हेतुर्येन वयं सुमेरुप्रत्याहतपवनसलिले इव व्यसनमासाद्य[1] प्रतिनिवृत्ताविति। श्वासमहाश्वासौ कथयतः। अस्माभिः काश्यपस्य सम्यक्संबुद्धस्यान्तिकाच्छरणगमनशिक्षापदानि गृहीतानीति। तौ कथयतः। यद्येवं वयमपि ग्रहीष्याम इति। तौ ताभ्यां सार्धं काश्यपस्य सम्यक्संबुद्धस्यान्तिके संप्रस्थितौ। तौ च संप्राप्तौ। चत्वारश्च लोकपालाः काश्यपस्य सम्यक्संबुद्धस्यान्तिकाद् धर्मं श्रुत्वा संप्रस्थिताः। ते ताभ्यां दृष्टाः। तौ सुपर्णिनौ श्वासमहाश्वासौ नागौ पृच्छतः। क एते इच्छन्तीति। ताभ्यां विस्तरेण कथितम्। सुपर्णिनौ कथयतः। यद्येवं वयमपि काश्यपस्य सम्यक्संबुद्धस्यान्तिकाच्छरणगमनशिक्षापदानि संगृहीत्वा प्रणिधानं कुर्म इति। ताभ्यां काश्यपस्य सम्यक्संबुद्धस्यान्तिकाच्छरणगमनशिक्षापदानि गृहीतानि। श्वासमहाश्वासाभ्यां पूर्वमेव गृहीतानि। ततः संभूय काश्यपस्य सम्यक्संबुद्धस्य पादयोर्निपत्य प्रणिधानं कर्तुमारब्धाः। यथैते चत्वारो लोकपालाः काश्यपस्य सम्यक्संबुद्धस्यान्तिकाद् धर्मं श्रुत्वा दृष्टसत्याः स्वभवनं संप्रस्थिता एवं वयमप्यनेन कुशलमूलेन चत्वारो लोकपालाः स्याम। यश्चादौ भगवता काश्यपेन सम्यक्संबुद्धेन उत्तरो मानवो व्याकृतः—भविष्यसि त्वं मानववर्षशतायुषि प्रजायां शाक्यमुनिर्नाम सम्यक्संबुद्ध इति।

1 Tib. 58a, l. 4 omits these two words. Ms. वामासाद्य।

सोऽप्यस्माकं भगवानेव मन्दाकिन्याः पुष्करिण्यास्तीरे धर्मं देशयेत्। वयं च तं धर्मं श्रुत्वा दृष्टसत्या एवमेव स्वभवनं गच्छाम इति।

किं मन्यध्वे भिक्षवो ये ते चत्वारो नागसुपर्णिनः एत एव ते चत्वारो लोकपालाः। योऽसौ श्वासः एष एवासौ धृतराष्ट्रस्तेन कालेन तेन समयेन। महाश्वासो विरूढकः अट्टेश्वरोऽसौ विरूपाक्षश्चूडेश्वरोऽसौ वैश्रवणस्तेन कालेन तेन समयेन। यदेभिः काश्यपस्य सम्यक्संबुद्धस्यान्तिकाच्छरणगमनशिक्षापदानि प्रतिगृह्य प्रणिधानं कृतं तस्य कर्मणो विपाकेन चत्वारो लोकपाला जाता ममान्तिके सत्यदर्शनं कृत्वा स्वभवनं गताः।

तां च धर्मदेशनां श्रुत्वा कैनेय ऋषिः परं विस्मयमुपागतो भगवति चाभिप्रसन्नः। ततोऽस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता। यां श्रुत्वा कैनेयर्षिणा सहसत्याभिसमयादनागामिफलं साक्षात्कृतम्। ततोऽसौ अवेत्यप्रसादसमन्वागतोऽष्टौ पानान्यादाय चोचपानं मोचपानं कोलपानमश्वत्थपानमुदुम्बरपानं परुषिकपानं खर्जूरपानं मृद्वीकापानं[1] च येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्। इमानि भदन्त अष्टौ पानानि पूर्वकैः ऋषिभिः स्तुतानि वर्णितानि। तानि भगवान्प्रतिगृह्णातु अनुकम्पामुपादाय। प्रतिगृह्णाति भगवान् कैनेयस्य ऋषेरन्तिकादष्टौ पानानि अनुकम्पामुपादाय। प्रतिगृह्य भिक्षूनामन्त्रयते स्म[2]। इतीमानि भिक्षवोऽष्टौ पानानि काले प्रतिग्राहितानि अकाले मर्दितानि

1 See above, p. iii.

2 Tib. 59b, l. 6.

अकाले परिस्रुतानि अकालेऽधिष्ठितानि पश्चाद्भक्तेन परिभोक्तव्यानि। इतीमानि अष्टौ पानानि काले प्रतिग्राहितानि काले मर्दितानि अकाले परिस्रुतान्यकालेऽधिष्ठितानि न परिभोक्तव्यानि। इतीमानि अष्टौ पानानि काले प्रतिग्राहितानि काले मर्दितानि काले परिस्रुतानि अकालेऽधिष्ठितानि न परिभोक्तव्यानि। इतीमानि अष्टौ पानानि अकाले मर्दितानि अकाले परिस्रुतानि पश्चाद्भक्तेन परिभोक्तव्यानि। रात्र्याश्च प्रथमे यामेऽतिक्रान्ते न परिभोक्तव्यानि[1]।

अथ कैनेयर्षिरुत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वो भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान् कैनेयस्यर्षेस्तूष्णींभावेन। अथ कैनेय ऋषिर्भगवतस्तूष्णींभावेनाधिवासनां विदित्वोत्थायासनात्प्रक्रान्तः। भगवानपि मन्दाकिन्याः पुष्करिण्यास्तीरेऽन्तर्हित उदुमायां प्रत्यष्ठात्सार्धं भिक्षुसंघेन। अथ कैनेय ऋषिः सरात्रमेवोत्थायान्तर्जनमामन्त्रयते। उत्तिष्ठत

1 Cf. Supra, p. v & Tib. 59b-60a As the Tibetan translation does not agree with the Sanskrit text, we reconstruct here the Sanskrit from Tibetan:—

इतीमानि भिक्षवोऽष्टौ पानानि काले प्रतिग्राहितानि काले मर्दितानि काले अधिष्ठितानि काले परिभोक्तव्यानि। अकाले न परिभोक्तव्यानि। रात्र्याश्च प्रथमे यामेऽतिक्रान्ते न परिभोक्तव्यानि। इतीमानि अष्टौ पानानि काले प्रतिग्राहितानि अकाले मर्दितानि अकाले परिस्रुतानि अकाले अधिष्ठितानि न परिभोक्तव्यानि। इतीमानि अष्टौ पानानि काले प्रतिग्राहितानि काले मर्दितानि अकाले परिस्रुतानि अकाले अधिष्ठितानि न परिभोक्तव्यानि। इतीमानि अष्टौ पानानि अकाले प्रतिग्राहितानि अकाले मर्दितानि अकाले परिस्रुतानि पश्चाद् भक्तेन न परिभोक्तव्यानि। रात्र्याश्च यामेऽतिक्रान्ते न परिभोक्तव्यानि।

आर्या उत्तिष्ठत। भद्रमुखाः काष्ठानि पाटयत। खाद्यकान्युल्लाडयत। प्रतिजाग्रत मण्डपवाडमिति।

तेन खलु समयेन शैलो नाम ऋषिः कैनेयस्य ऋषेर्भागिनेयस्तस्मिन्नावसथे रात्रिं वासमुपगतः। अश्रोषीत् शैल ऋषिः कैनेयमृषिं सरात्रमेवोत्थायान्तर्जनमामन्त्रयन्तम्। श्रुत्वा च पुनः कैनेयमृषिमिदमवोचत्। किं पुनस्ते ऋषे सब्रह्मचारिणो निमन्त्रिताः। राजा वा मागधश्रेण्यो बिंबिसारो राष्ट्रनिवासी जनकायो यथेप्सितस्य वा ऋषिधर्मस्य परिसमाप्तिरिति। स कथयति। न मे शैल सब्रह्मचारिण उपनिमंत्रिता नापि राजा मागधश्रेण्यो बिंबिसारो राष्ट्रनिवासी जनकायो नापि यथेप्सितस्य ऋधिधर्मस्य परिसमाप्तिः। अपि तु मया बुद्धप्रमुखो भिक्षुसंघो भक्तेनोपनिमंत्रित इति तस्य बुद्ध इत्यश्रुतपूर्वं घोषं श्रुत्वा सर्वरोमकूपान्याहृष्टानि। सगौरवः स पप्रच्छ। क एष ऋषे बुद्धो नाम इति। अस्ति शैल श्रमणो गौतमः शाक्यपुत्रः शाक्यकुलात्केशश्मश्रूणि अवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धयागारादनगारिकां प्रव्रजितः। सोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। स एष बुद्धो नामेति। शैलः कथयति। क एष ऋषे संघो नामेति। कैनेय ऋषिः कथयति। सन्ति शैल क्षत्रियकुलादपि कुलपुत्राः केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धयागारादनगारिकां प्रव्रजिताः। सन्ति ब्राह्मणकुलादपि वैश्यकुलादपि कुलपुत्राः पूर्ववत् तमेव भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं प्रव्रजिताः। स एष ऋषे संघो नाम इति। अयं च शैल संघः पूर्वकश्च

बुद्धः । स एष बुद्धप्रमुखो भिक्षुसंघो मया भक्तेनोपनिमन्त्रितः। अथ शैलऋषिर्बुद्धालम्बनया स्मृत्या काल्यमेवोत्थाय पञ्चशतपरिवारो येन भगवांस्तेनोपसङ्क्रान्तः। उपसङ्क्रम्य भगवन्तमेतदवोचत्। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति। लब्धवान् शैलऋषिः पञ्चशतपरिवारः स्वाख्याते धर्मविनये प्रव्रज्यामुपसम्पदं भिक्षुभावम्।

अथ कैनेयऋषिस्तामेव शुचि प्रणीतं खादनीयभोजनीयं पूर्ववद्यावत्सन्तर्पयति संप्रवारयति। तेन बुद्धप्रमुखं भिक्षुसंघं भोजयमानेन शैलः प्रव्रजितो दृष्टः। स कथयति। शैल त्वं प्रव्रजितः। प्रव्रजित्वा सुष्ठु कृतं साधु कृतम्। अहमपि बुद्धप्रमुखं भिक्षुसंघं भोजयित्वा प्रव्रजिष्यामीति। अथ कैनेय ऋषिरनेकपर्यायेण बुद्धप्रमुखं भिक्षुसङ्घं शुचिना प्रणीतेन खादनीयभोजनीयेन सन्तर्प्य सम्प्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। ततो भगवांस्तस्मै दक्षिणामादिश्य धर्मदेशनां कृत्वा प्रक्रान्तः। अथ कैनेय ऋषिर्यत्त्वोत्पादनधर्मकं[1] सर्वं विसर्जनधर्मकं कृत्वा पञ्चशतपरिवारो येन भगवांस्तेनोपसंक्रान्तः। उपसङ्क्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थितः कैनेय ऋषिर्भगवन्तमिदमवोचत्। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसम्पदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके

1 Tib. 62a, l. 4.

ब्रह्मचर्यमिति। लब्धवान् कैनेय ऋषिः पञ्चशतपरिवारः स्वाख्याते धर्मविनये प्रव्रज्यामुपसम्पदं भिक्षुभावम्।

अथ भगवांस्तद्भिक्षुसहस्रं प्रव्रज्योपसम्पाद्य नद्याः प्रभद्रिकायास्तीरे वासमुपगतश्छत्राम्बुवने। तत्र भगवता पञ्चभिक्षुशतान्यायुष्मते ब्राह्मणकप्फिणाय दत्तानि। अर्धतृतीयान्यायुष्मते महामौद्‌गल्यायनाय। अर्धतृतीयान्यायुष्मते शारिपुत्राय। तत्र ये आयुष्मता ब्राह्मणकप्फिणेनावचोदितास्तैः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। ये आयुष्मता महामौद्गल्यायनेन तैरनागामिफलम्। ये आयुष्मता शारिपुत्रेण तैः स्रोतआपत्तिफलम्।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्त भगवता आयुष्मान् शारिपुत्रो महाप्रज्ञानामग्र्यो व्याकृतः आयुष्मांश्च महामौद्गल्यायनो महर्धिकानां महानुभावानाम्। अथ च पुनर्ये आयुष्मता ब्राह्मणकप्फिणेनावचोदितास्तैरर्हत्त्वं साक्षात्कृतम्। ये आयुष्मता महामौद्गल्यायनेन तैरनागामिफलम्। ये आयुष्मता शारिपुत्रेण तैः स्रोतआपत्तिफलम्। भगवानाह। भिक्षव एतर्हि यथा तथातीतेऽप्यध्वनि ये ब्राह्मणकप्फिणेनावचोदितास्ते आरूप्यधातौ प्रतिष्ठिताः। ये मौद्‌गल्यायनेन ते रूपधातौ। ये शारिपुत्रेण ते पञ्चस्वभिज्ञासु प्रतिष्ठिताः। तच्छ्रूयताम्।

भूतचरं[1] भिक्षवोऽन्यतरस्मिन्नरण्यायतने द्वौ ऋषी प्रतिवसतः। प्रत्येकं पञ्चशतपरिवारः। यावदपरेण समयेन तयोरेकः

1 Tib. 63a, l. 4: སྔོན་བྱུང་བ།

कालगतः। ततस्तस्य माणवका गुरुवियोगदुःखदौर्मनस्यसन्तप्ता इतश्चामुतश्च परिभ्रमन्तस्तस्य द्वितीयस्यर्षेः सकाशमुपसङ्क्रान्ताः। तेन ते दृष्टा अश्रुपर्याकुलेक्षणाः पृष्टाश्च। माणवका योऽसौ युष्माकमुपाध्यायः कालगतः। स संलक्षयति। ममात्ययान्माणवकानामीदृशी समवस्था भविष्यति। यत्त्वहमेषामुपसंग्रहं कुर्यामिति। तेन ते समाश्वासिता उपसंगृहीताश्च। यावदपरेण समयेन सोऽपि ऋषिर्ग्लानः संवृत्तः। तस्य त्रयोऽग्रशिष्याः। तेनैकैकस्य पञ्चशतानि दत्तानि। द्वितीयस्यार्धतृतीयानि। तृतीयस्यार्धतृतीयानि। स कालधर्मेण संयुक्तः। तत्र यस्य पञ्चशतानि दत्तानि तेन तथावचोदितानि यथा आरूप्यधातौ प्रतिष्ठापितानि। यस्यार्धतृतीयानि तेन तथावचोदितानि यथा रूपधातौ प्रतिष्ठापितानि। यस्याप्यर्धतृतीयानि तेन तथावचोदितानि यथा पञ्चस्वभिज्ञासु प्रतिष्ठापितानि। किं मन्यध्वे भिक्षवो योऽसौ ऋषिर्येन तानि पञ्चमाणवकशतान्यारूप्यधातौ प्रतिष्ठापितान्येष एवासौ कप्फिणो भिक्षुस्तेन कालेन तेन समयेन। येनार्धतृतीयानि रूपधातौ प्रतिष्ठापितान्येष एवासौ मौद्गल्यायनो भिक्षुः। येनाप्यर्धतृतीयानि शतानि पञ्चस्वभिज्ञासु प्रतिष्ठापितानि एष एवासौ शारिपुत्रो भिक्षुः। अपि तु भिक्षवो ये कप्फिणेनावचोदितास्ते तीक्ष्णेन्द्रियाः। ये मौद्गल्यायनेन ते मध्येन्द्रियाः। ये शारिपुत्रेण ते मृद्विन्द्रियाः। यदि शारिपुत्रेणावचोदिता नाभविष्यन् उष्मगता अप्यनयगता अभविष्यन्[1]।

1 Tib. 64a, l. 1.

सर्वे समग्राः शृणुत विप्रसन्नेन चेतसा ।
प्रकाशयन् बुद्धवर्णं कैनेय-जटिलस्तथा ॥
एकस्मिन्समये शास्ता कैनेयस्य निवेशने ।
सश्रावको महावीरो भोजनेन निमन्त्रितः ॥
अद्राक्षीद् ब्राह्मणः शैलः कैनेयस्य निवेशने ।
प्रतिजाग्रग्रमानमशनं दृष्ट्वा कैनेयमब्रवीत् ॥
विवाहः किं नु राजा वा राष्ट्रं वोपनिमन्त्रितम् ।
अथवा ते महाप्रज्ञ पृष्ट आचक्ष्व तन्मम ॥
न मे विवाहो राजा वा राष्ट्रं वोपनिमन्त्रितम् ।
अग्रसत्त्वो मया बुद्धो भक्तेनोपनिमन्त्रितः[1] ॥
सोऽयं बुद्ध इति श्रुत्वा शैलः संवेगमागतः ।
क एष बुद्धः [कैनेय] पृष्ट आचक्ष्व तन्मम ॥
अस्ति शाक्यकुले जातः स शास्ताप्रतिपुद्गलः ।
बुद्धिमान् सर्वधर्मेषु तस्माद् बुद्धो निरुच्यते ॥
दृष्टं ह्यतीतं बुद्धेन तथा दृष्टमनागतम् ।
प्रत्युत्पन्नमथो दृष्टं संस्कारा [व्यय]धर्मिणः ॥
यच्च किञ्चिदभिज्ञेयं सर्वं तद्वेत्ति तत्त्ववित् ।
सर्वज्ञः सर्वदर्शी च तस्माद् बुद्धो निरुच्यते ॥
अभिज्ञेयमभिज्ञातं भावनीयं च भावितम् ।
प्रहातव्यं प्रहीनं च तस्माद् बुद्धो निरुच्यते ॥

1 Tib. 64a, l. 5.

जायमाने च यत्नेयं ससमुद्रा सपर्वता ।
प्रकंपिताभू[द्धरणी] तं नमस्ये कृताञ्जलिः ॥
निहतो येन मारश्च कृष्णबन्धुः सवाहनः ।
तथागतबलप्राप्त तं नमस्ये कृताञ्जलिः ॥
येन तद्द्वादशाकारं धर्मचक्रं प्रवर्तितम् ।
वाराणसीं पुरीं गत्वा तं नमस्ये कृताञ्जलिः ॥
रागबन्धेन बद्धान् ये रागद्वेषाभिपीडितान् ।
बहून्मोचयते सत्त्वांस्तं नमस्ये कृताञ्जलिः ॥
कुत्र बुद्धः स भगवान्कियद्दूरे विनायकः ।
अद्यैव शरणं यामि शाक्यपुत्रं प्रभाकरम् ॥
गच्छ ब्राह्मण तेनेदं वनषण्डं मनोरमम् ।
गन्धर्वराजोपनिभं बुद्धं द्रक्ष्यस्यनुत्तरम् ॥
काषायवस्त्रं द्युतिमन्तं हेमवर्णं हरित्त्वचम् ।
तद्धाटकमिवोत्तप्तं बिम्बं हेममयं यथा ॥
सालवृक्षं कुसुमितं पुष्पितं कर्णिकारवत् ।
नानारत्नपरिच्छन्नं यूपं रत्नमयं यथा ॥
समन्ततोऽवभासयति समन्ताद् व्यामतेजसा[1] ।
आरोहपरिणाहेन न्यग्रोधपरिमण्डलः ॥
सर्वकामरतिं हित्वा स्फीतं राज्यं सबान्धवम् ।
प्रव्रज्यामभिनिष्क्रान्तो विवेके रमते मुनिः ॥

1 Tib. 65a, l. 2: ཁོར་ཡུག་འདོམ་གང་འོད་ཀྱིས་ནི །

सिंहवन्नदते च्छम्भी केसरी गन्धमादने ।
वनान्तरेष्वसंत्रस्तं बुद्धं द्रक्ष्यसि ब्राह्मण ॥
ब्रह्मस्वरं मंजुगिरं श्लक्ष्णवाचा स्मितोन्मुखम् ।
दुन्दुभिस्वरनिर्घोषं बुद्धं द्रक्ष्यसि ब्राह्मण ॥
चन्द्रं वा गगने शुद्धं नक्षत्रपरिवारितम् ।
चन्द्रमण्डलसंकाशं बुद्धं द्रक्ष्यसि ब्राह्मण ॥
वैरोचनं वा दीप्तांशुं भानुमन्तं नभस्तले ।
वीतान्धकारं राजन्तं बुद्धं द्रक्ष्यसि ब्राह्मण ॥
यथार्षभं यूथपतिमचलं ककुदं स्थितम् ।
पुरुषर्षभं दशबलं बुद्धं द्रक्ष्यसि ब्राह्मण ॥
समुद्रमिव गम्भीरमप्रमेयं महोदधिम् ।
अचिन्त्यं ध्यायिनामग्र्यं बुद्धं द्रक्ष्यस्यनुत्तरम् ॥
निर्यान्तं कृष्णपक्षाद्वा भानुमन्तमिवाम्बरे ।
ध्मायन्तमग्निस्कन्धं वा बुद्धं द्रक्ष्यसि गौतमम् ॥
चक्रवर्ती यथा राजा सचिवैः परिवारितः ।
अर्हद्भिरिव संबुद्धः शोभते संपुरस्कृतः ॥
वशवर्ती च कामेषु महाब्रह्मा यथेश्वरः ।
त्रिसहस्रं लोकधातुं वशी वर्तयते मुनिः ॥
सत्यानि संप्रकाशयति मध्विव नीडकात् स्रवत्[2] ।
श्रुत्वा यदुपशाम्यन्ति प्रतरन्ति महार्णवम् ॥

1 Tib. 65b, l. 2.

2 Tib. 65b, l. 5: སྦྲང་རྩི་མ་བསྐོལ་ ར་བྱ་བ | Cf. Mahāvyutpatti, 231. 48.

दुःखं नैकप्रकारं च यच्च दुःखस्य संभवम् ।
दुःखस्य च व्युपशमं मार्गं द्विचतुरङ्गिकम् ॥
अधनानां धनं दाता आतुरांश्च चिकित्सति ।
उपद्रुतानां शरणं दुःखान्मोचयति प्रजाः ॥
सत्त्वानामन्धभूतानां मूढानामुत्पथचारिणाम् ।
ऋजुमार्गं प्रकाशयति क्षेमं निर्वाणगामिनम् ॥
आदीप्तां रागद्वेषाभ्यां मोहप्रज्वलितां प्रजाम् ।
महामेघो यथा वृष्ट्या निर्वापयति महामुनिः ॥
रूपवर्णबलोपेतः सदृशोऽस्य न विद्यते ।
नारायणसंहननः शैलो वा सुप्रतिष्ठितः ॥
लाभालाभसुखैर्दुःखैर्निन्दयाथ प्रशंसया[1] ।
यशोऽयशोभ्यामलिप्तः पङ्कजं वारिणा यथा ॥
प्राणातिपाताद्विरतो नादत्तमभिनन्दति ।
सत्यवादी ब्रह्मचारी पैशुन्यात्स उपारतः ॥
परुषं नान्युदीरयति मञ्जु कालेन भाषते ।
अभिध्या नास्य कामेषु मैत्रचित्तः स जन्तुषु ॥
सत्यदर्शनसंपन्नः समाधिबलगोचरः ।
षडभिज्ञो महाध्यायो नभश्चर्या विगाहते ॥
शृणोति विविधाञ्छब्दान् ये दिव्या ये च मानुषाः ।
चित्तं परेषां जानाति क्लिष्टं वा यदि वाशुभम् ॥

1 Tib. 66a, l. 2.

पूर्वं निवासकुशलो यत्र यत्रोषितः पुरा ।
च्युत्युपपादं जानाति सत्त्वानामागतिं गतिम् ॥
क्षीणास्रवो विसंयुक्त उपशान्तः सुनिर्वृतः ।
शान्तेन्द्रियः शान्तचित्तः पूर्णो वा ध्यायते हृदि ॥
नागं वा पद्मिनीमध्ये कुञ्जरं षष्टिहायनम् ।
प्रेक्षमाणस्तृप्यमानः प्रीतिं ब्राह्मण लप्स्यसे ॥
ईदृशो भगवाञ्छैल वह्निस्कन्ध इव तेजसा ।
द्वात्रिंशत्तस्य गात्रेषु महापुरुषलक्षणाः ॥
योऽपि वर्षशतं पूर्णं वर्णं भाषेत तायिनः ।
स पर्यन्तं नाधिगच्छेदप्रमेयस्तथागतः ॥
एतं ब्राह्मण पश्यन्ति लाभस्तेषामनुत्तरः ।
दृष्ट्वा ये शरणं यान्ति तेषां लाभभरस्ततः[1] ॥
संविग्नो ब्राह्मणः शैलः श्रुत्वा वर्णं महामुनेः ।
विवेकचित्तसङ्कल्पः कैनेयमिदमब्रवीत् ॥
न मे मनुष्यभूतस्य वर्ण एतादृशः श्रुतः ।
श्रेष्ठोऽसौ सर्वलोकस्य यथा कैनेय भाषसे ॥
मानध्वजं प्रहाय त्वं वणिजो वा धनार्थिकः ।
शुश्रूषुः पर्युपास्वैवं प्रीतिं ब्राह्मण लप्स्यसे ॥
पञ्चभिः शतैर्माणवानां शिष्येभिः संपुरस्कृतः ।
निर्याति ब्राह्मणः शैलो येन बुद्धाश्रमः शुभः ॥

1 Tib. 66b, l. 3.

विविक्तमल्पनिर्घोषं द्विजसङ्घनिषेवितम् ।
पुष्पपादपसम्पन्नं देवानामिव नन्दनम् ॥
किन्नरीव्यालभरितं शाक्यपुत्रनिषेवितम् ।
आवासं धर्मराजस्य प्राविशद् ब्राह्मणस्ततः[1] ॥
अदान्तदमकं दृष्ट्वा सारथिं पुरुषोत्तमम् ।
शैलो वाचमुदीरयति भवान्कच्चिदनामयः ॥
नेलया पूर्णया वाचा कलविङ्करुतस्वनः ।
बुद्धः प्रत्यवदच्छैलं तत् खल्वहमनामयः ॥
अकिञ्चनोऽस्म्यनादानोऽथानघश्छिन्नसंशयः ।
विप्रमुक्तो विसंयुक्तो ह्यखिलोऽहमनास्रवः ॥
चरामि विरजो लोके शुद्धः शुचि निरामयः ।
शुचि ब्राह्मण तेनास्मि सर्ववैरभयातिगः ॥
तवापि स्वागतं शैल सन्निषीदेदमासनम् ।
मा परिक्लान्तकायोऽसि कच्चिद् ब्राह्मण ते सुखम् ॥
सुखितोऽहं महावीर त्वां दृष्ट्वाद्य महामुनिम् ।
प्रतीतमानसस्तुष्टो भूषणैर्वा विभूषितः ॥
अनुपूर्वमुदीर्याथ कथां तत्रानुपूर्विकीम् ।
ह्रीयमानो नीचमना [2]न्यषीदद् ब्राह्मणस्ततः ॥
अध्यापको मन्त्रधरस्त्रैविद्यो वेदपारगः ।
निषद्य ब्राह्मणः शैलो लक्षणानीक्षते मुनेः ॥

1 Tib. 67a, l, 1.

2 Tib. 67a, l. 7.

अद्राक्षील्लोकनाथस्य त्रिंशद् गात्रेषु लक्षणान् ।
द्वयोः काङ्क्षति शैलश्च कोषोपगतजिह्वयोः ॥
कथंकथी वैमतिको लक्षणानि महामुनेः ।
आङ्गिरसं[1] सत्यनामसंबुद्धं परिपृच्छति ॥
श्रुतानि यानि द्वात्रिंशल्लक्षणानि महामुनेः ।
द्वयं तत्र न पश्यामि तव गात्रेषु गौतम ॥
कच्चित्कोषप्रतिच्छन्नवस्तिगुह्यमिहास्ति ते ।
रसनानुत्तमा वापि कच्चिज्जिह्वा न ह्रस्विका ॥
कच्चित्प्रभूतजिह्वोऽसि जानीयां ते महामुने ।
निर्णामयाशु तनुकां काङ्क्षां व्यपनयस्व मे ॥
कदाचित्कर्हिचिल्लोके उत्पद्यन्ते विनायकाः ।
उदुम्बरे वा कुसुमं दुर्लभो हि महामुनिः ॥
वारि ग्रीष्माभितप्तो वा भोजनं वा बुभुक्षितः ।
आतुरो भेषजं यद्वच्छास्तारं पर्युपास्महे ॥
नेलया पूर्णया वाचा कलविङ्करुतस्वनः ।
बुद्धः प्रत्यवदच्छैलं काङ्क्षां ब्राह्मण निर्णुद ॥
उभे च चक्षुषी श्रोत्रे प्रच्छादयति जिह्वया ।
प्रभूतया च्छादयति जिह्वया मुखमण्डलम् ॥
रिद्धया विदर्शयति चाप्यृद्धिपादेषु कोविदः ।
अद्राक्षीद् ब्राह्मणः शैलो गुह्यं कोषावृतं मुनिः ॥

1 Tib. 67b, 1, 2.

आवृढशल्यो निष्काङ्क्षो लक्षणानि महामुनेः ।
प्रहृष्टचित्तसंकल्पः शैलो वाचमुदैरयत् ॥
मन्वेष्वाप्तानि मे यानि द्वात्रिंशल्लक्षणान्यहम् ।
सर्वं तत्तव गात्रेषु परिपूर्णमनूनकम् ॥
कल्याणवाक्सुचरितः सुजातः प्रियदर्शनः ।
मध्ये श्रमणसंघस्य भास्करो वा विरोचसे ॥
कार्यं श्रमणभावेन किं तवोत्तमवर्णिनः[1] ।
राजा त्वमर्हो भवितुं चक्रवर्ती नरर्षभः ॥
चतुरङ्गबलोपेतो रत्नैः सप्तभिरेव च ।
वर्तयति क्षितौ चक्रं राजा भव महीपतिः ॥
राजाहमस्मि शैलेति धर्मराजो ह्यनुत्तरः ।
धर्मेण चक्रं वर्तये इहाहं भूमिमण्डले ॥
कल्योऽस्म्यहं कुले जातः क्षत्रियोऽस्म्यभिजातितः ।
वित्रास्य सबलं मारं प्राप्तः सम्बोधिमुत्तमाम् ॥
स्मृतिर्ब्राह्मण चक्रं मे प्रज्ञा मे परिनायकः ।
वीर्यं हयः शीघ्रजवो धुरं वहति चोदितः ॥
समाधिर्मे मणिश्रेष्ठो ह्यन्धकारे प्रभाकरः ।
उपेक्षा हस्तिनागश्च धुरं वहति चोदितः ॥
स्त्री वै रतिः सरागाणां प्रीतिर्ब्राह्मण मे रतिः ।
प्रसृष्टं ब्राह्मण श्रेष्ठं धनं गृहगतं मया ॥

1 Tib. 68a, l. 4.

सप्त बोध्यङ्गरत्नानि सर्वलोकातिगानि ते ।
प्रबोधयामि यैः सुप्तामन्धभूतामिमां प्रजाम् ॥
जिता मया दिशः सर्वाः प्रतिशत्रुर्न विद्यते ।
चतस्रो मे पर्षदश्च चतुरङ्गं बलं मम ॥
अध्यावसामि नगरं पूर्वबुद्धनिषेवितम् ।
रिद्ध्यारामोपसंपन्नं मार्गनिर्मितचत्वरम् ॥
सूत्रान्तजातकाकीर्णं महापुरुषसेवितम् ।
त्रयो विमोक्षद्वाराणि स्मृत्यारक्षाभिगोपितम् ॥
ह्री-व्यपत्राप्यसंपन्नः अहं राजा तथागतः ।
धर्मयुद्धं मया दत्तं धर्मभेरी पराहता ॥
वित्रास्य सबलं मारमभिषिक्तोऽस्मि बोधये ।
सुभाविता अप्रमाणाः सन्ति चाभरणानि मे ॥
ब्राह्मा विहाराश्चत्वारः क्लेशानां परिवारणाः[1] ।
परप्रवादा विहता विध्वस्ता विरूढीकृताः ॥
मम सम्यक्त्वं लोकेऽस्मिन्नालोकं प्राणिनां ददत् ।
छिन्न दृग् ज्ञानशस्त्रेण[2] विवेकश्चायुधं मम ॥
रिद्धिपादः अवस्थानं शमथो मुष्टिसंग्रहः ।
शीलरथो नन्दिघोषः[3] सारथिर्मे विपश्यनः ॥
सन्नाहः क्षान्तिः सौरत्यं संग्रामो मार्गभावनः ।
कलापः पञ्चेन्द्रियाणि येभिर्निवरणं हतम् ॥

1 Tib. 69a, l. 1: ཡོངས་སུ་སྤོང་བས ।=परिवर्जन ।

2 Tib. 69a, l. 2. 3 Tib. 69a, l. 3: སྒྲ་སྙན་ ।

चत्वारः सम्यक्प्रहाणा येभिः क्लेशा निसूदिताः ।
शूरयुद्धं मया दत्तं धर्मभेरी मया हता ।
विलास्य सबलं मारमभिषिक्तोऽस्मि बोधये ॥
अविद्यां विद्यया हत्वा स्कन्धानामुदयव्ययम् ।
संग्रामशीर्षमुत्तीर्णो बुद्धोऽहं बोधये प्रजाम् ॥
त्रयो लोके महाचौरा यैरियं बाध्यते प्रजा ।
रागो द्वेषश्च मोहश्च सर्वे ते नाशिता मया ॥
अर्हंश्च दक्षिणेयोऽस्मि षडभिज्ञो बलोद्यतः ।
सुक्षेत्र[1] प्रतिपन्नानामाहुतीनां प्रतिग्रहः[2] ॥
आरभ्य परमं वीर्यमास्रवा निहता मया ।
महान्तमोघमुत्तीर्णो मुह्यमानेष्ववस्थितः ॥
दंष्ट्राबली यथा सिंह आसाद्य प्राणिनो वने ।
समं तेषु प्रहरति बाल्ये मध्ये महल्लके ॥
तथैव लोके संबुद्धो नरसिंहो विनायकः ।
समं धर्मं प्रकाशयति बालमध्यमहात्मसु ॥
आतुरस्य च मे ह त्वं कांक्षां विनय गौतम ।
भवान् हि शल्यहर्तॄणां वरश्चालोकवेदिनाम्[3] ॥
विनय शाम्य ते कांक्षामधिमुच्यस्व ब्राह्मण ।
दुर्लभं दर्शनं भवति संबुद्धानां यशस्विनाम् ॥

1 Tib. 69a, l. 7: ཞིང་ ག་ཞེན་པ །

2 Cf. *Apādāna*, (P. T. S.), p. 172, 179 : āhutīnaṃ paṭiggaho.

3 Tib. 69b. l. 3-4: མིག་ མཁན་ རྣམས་ཀྱི་ མཆོག་ ཁྱོད་ ལགས །

यस्येह दुर्लभो भवति प्रादुर्भावः कदाचन ।
सोऽहं ब्राह्मण संबुद्धो धर्मराजो निरुत्तरः ॥
संबुद्धोऽस्मीति वदसि शैलोवाच तथागतम् ।
प्रवर्तयसि केवलं चक्रं यथा गौतम भाषसे ॥
सेनापतिः को भवतः श्रावकः शास्तुरात्मजः ।
यत्त्वया वर्तितं चक्रमनुवर्तयति पण्डितः ॥
अस्ति मे श्रावको ब्रह्मन्सदृशः प्रज्ञयात्मजः ।
उपतिष्य इति ख्यातः शारिपुत्रो बहुश्रुतः ॥
सर्वग्रन्थविसंयुक्त उपशान्तो निरास्रवः ।
यन्मया वर्तितं चक्रमनुवर्तयति पण्डितः ॥
अहो [सं]बुद्ध आश्चर्यमहो श्रावकसंपदः[1] ।
लोकेष्वाश्चर्यमुत्पन्नमहो रत्नत्रयं परम् ॥
अहं वदामि भद्रं ते श्रावकत्वमुपागतः ।
अहो धर्मरसं पीत्वा भविष्यामि सुनिर्वृतः ॥
प्रहृष्टचित्तसंकल्पः संव्यग्रो ब्राह्मणस्ततः ।
विवेकचित्तसंकल्प इदं पर्षदमब्रवीत् ॥
इदं भवन्तः शृणुत चक्षुष्मान् भाषते यथा ।
शल्यहन्ता महाध्यायी वने नदति सिंहवत् ॥
य इच्छन्त्यनुगच्छन्तु ये नेच्छन्ति व्रजन्तु ते ।
अद्यैव प्रव्रजिष्यामि वरप्रज्ञस्य शासने ॥

Some words of this line are omitted in Tibetan.

सुचीर्णे ब्रह्मचर्येऽस्मिन्मार्गे चैव सुभाविते ।
प्रव्रज्या सफला भवत्यप्रमादविहारिणः ॥
रोचते चेदियं तव प्रव्रज जिनशासने ।
छित्त्वेह ब्राह्मण जटे प्रव्रजिष्यामहे वयम् ॥
प्रहृष्टचित्तसंकल्पो दशाङ्गुलिकृताञ्जलिः ।
अवदद् ब्राह्मणः शैलो धृत्वैकांसं सचीवरम् ॥
पंचशता मानवा एते तिष्ठन्ति प्राञ्जलीकृताः ।
लभेमहे साधु मुने प्रव्रज्यामुपसंपदम् ॥
ततः कारुणिकः शास्ता महर्षिरनुकम्पकः ।
एहि भिक्षव इत्याह स तेषामुपसंपदा ॥
शारिपुत्रो महाप्राज्ञो मौद्गल्यायन ऋद्धिमान् ।
ब्राह्मण कप्फिणस्थविरः[प्र]तिभानगतिं गतः ॥
नदीसुन्दरिकातीरे वनषण्डे मनोरमे ।
तांस्तत्रावदन् स्थविराः प्रतिभानेषु कोविदाः ॥
तेभ्यस्तं धर्ममाज्ञाय कथां तत्रानुलोमिकीम् ।
न चिरस्य विसंयुक्ता उत्तमार्थे प्रतिष्ठिताः ॥
ते दृष्टलाभाः सुखिता दृष्टधर्माभिनिर्वृताः ।
ते पश्यन्ति प्रमुदिताः संबुद्धं लोकनायकम् ॥
सद्धर्मं च धनश्रेष्ठं शिक्षां च जिनवर्णिताम् ।
नमस्यन्त्यप्रमादं च समाधिं प्रतिसंस्तरम्[1] ॥

1 Tib. 70b, l. 6: འགྲོད་པ | Cf. Māhāvyutpatti, 141. 16.

तस्मादिहात्मकामेन माहात्म्यमभिकाङ्क्षताम् ।
बुद्धं धर्मं च संघं च सत्कृतिं शरणं व्रजेत् ॥
एतद्धि शरणं लोके वर्णितं तत्त्वदर्शिना ।
उपद्रुतानां त्रस्तानां सर्वसौख्यप्रदायकम् ॥
आदित्यबुद्धो बुद्धस्य धर्म्यं माहात्म्यमुत्तमम् ।
शासनं धर्मराजस्य भजेन्मोक्षार्थिकः सदा ॥

कैनेयगाथाः समाप्ताः ॥

अथ भगवान् काशीषु जनपदे चारिकां चरन् काशीपट्टमनुप्राप्तः। तस्मिंश्च काशीपट्टे शोभितपूर्विणौ द्वौ पितापुत्रौ प्रव्रजितौ। पुत्रः कथयति। भगवान् श्रावकसंघः काशीषु जनपदे चारिकां चरन्निहानुप्राप्तः श्रान्तकायो भगवान्भिक्षुसंघश्च। यन्नु वयं भगवन्तं सश्रावकसंघं यवागूपानेनोपनिमन्त्रयामः। तत्किं त्वं पेयां समुपानयसि आहोस्विद्भिक्षुसंघमुपनिमंत्रयसीति। गच्छ त्वं भिक्षुसंघमुपनिमंत्रय। अहं पेयां समुपानयामीति। तेन भिक्षुसंघ उपनिमंत्रितः। सोऽप्यादर्शं गृहीत्वा वीथीं[1] गतः। तेन तस्यां श्रेष्ठी दृष्टो दीर्घकेशश्मश्रुः। तस्य तेनादर्श उपदर्शितः।. स कथयति। आर्य एतदप्यस्ति ते कौशल्यम्[2]। स कथयति। अस्ति। अवतारय[3]। सोऽवतारयितु-

1 Tib. 71a, l. 7: ཚོང་དུས ।=market place.

2 Eng. transl.: Are you also proficient in shaving ?

3 Tib, 71b. l, 1: གལ་ཏེ་མཐའ་ན་ རེགས་ ཤིག ।=If so, shave.

मारब्धो गृहपतिर्मिद्धमवक्रान्तः। अवतारिते प्रतिबुद्धः। स कथयति। आर्यावतारितम्। गृहपते अवतारितम्। सन्तुष्टः कथयति। आर्य अतीव परितुष्टोऽस्मि। वद कं ते वरमनुप्रयच्छामीति। स कथयति। मया बुद्धप्रमुखो भिक्षुसंघो यवागूपानेनोपनिमंत्रितः। यवागूमनुप्रयच्छेति। स कथयति। आर्य किं ते यवागूपानेन। प्रणीतं खादनीयभोजनीयमनुप्रयच्छामि। गच्छोपनिमन्त्रयस्वेति। आरोग्यमित्युक्त्वासौ प्रक्रान्तः। ततोऽसौ गृहपतिः शुचिप्रणीतं खादनीयभोजनीयं पूर्ववद्यावत्पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णस्तत्र प्रणीतं खादनीयभोजनीयं चार्यते। भिक्षवः संलक्षयन्ति। वयं लूहेनोपनिमन्त्रिताः। अयं च प्रणीत आहारः। कथं वयं प्रतिगृह्णीम इति। ते न प्रतिगृह्णन्ति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। यदि लूहेनोपनिमन्त्रितः प्रणीतं लभते परिभोक्तव्यम्। नात्र कौकृत्यं करणीयम्।

भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षवो जातीयं भाण्डं धारयन्ति[1]। तस्मान्न भिक्षुणा शिल्पमुपदर्शयितव्यम्। न तावज्जातीयेन तावज्जातीयं भाण्डमुपस्थापयितव्यम्[2]। उपस्थापयति सातिसारो भवति स्थापयित्वा वैद्यपूर्विणां शस्त्रकोषं कायस्थपूर्विणामपि भाजनं सूचिकप्रव्रजितानां सूचीगृहमिति[3]।

1 Tib. 72a, l. 2: རིགས་ དང་ འབྱུང་བའི་ སྣོད་ གྲོགས་པ།

2 Tib. 72a, l, 2: རིགས་ དང་ འབྱུང་བའི་ སྣོད་ཀྱང་ བསྟེལ་ བར་མི་ བྱའོ། སྟེལ =gold ; जातरूपम्।

3 Tib. 72a, l, 4: ཁབ་ རལ=सूचीगृहकम् ; needle-case.

भगवान्मल्लेषु जनपदे चारिकां चरन् पापामनुप्राप्तः। पापायां विहरति जलूकावनषण्डे। पापायां रोचो नाम मल्लमहामात्यः प्रतिवसति। आयुष्मत आनन्दस्य मातुलः। सोऽतीवाश्राद्धः। अश्रौषुः पापेया मल्ला भगवान् मल्लेषु जनपदे चारिकां चरन् पापामनुप्राप्तः पापायां विहरति जलूकावनषण्ड इति। श्रुत्वा च पुनः संजल्पं कुर्वन्ति। भवन्तः श्रूयते भगवान्मल्लेषु जनपदे चारिकां चरन् पापामनुप्राप्तः पापायां विहरति जलूकावनषण्ड इति। सचेदस्माकमेकैको बुद्धप्रमुखं भिक्षुसंघं भोजयिष्यति अपरेऽवकाशं न लप्स्यन्ते। सर्वथा क्रियाकारं व्यवस्थापयामः। न केनचिदस्माकमेकाकिना बुद्धप्रमुखो भिक्षुसंघो भोजयितव्यः। समस्ता एव वयं भोजयिष्यामः। यो युष्माकमेकाकी भोजयति स गणेन षष्टिं कार्षापणान् दण्ड्य इति। अथ पापेया मल्लाः सर्वे संभूय येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। एकान्तनिषण्णान् पापेयान् मल्लान् भगवान्धर्म्यया कथया संदर्श्य पूर्ववद्यावत्संप्रहर्ष्य तूष्णीम्। अथ पापेया मल्ला उत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयत्वस्माकं भगवन् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। अधिवासयति भगवान् पापेयानां मल्लानां तूष्णींभावेन। अथ पापेया मल्ला भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वोत्थायासनात्प्रक्रान्तः। रोचो मल्लमहामात्यस्तत्रैवास्थात्।

स आयुष्मता आनन्देनोक्तः। रोच किं त्वं श्राद्धः संवृत्तः। स कथयति। नाहं श्राद्धः संवृत्तः। किन्तु गणेन क्रियाकारः कृतः। पूर्ववद्यावत्षष्टिं कार्षापणान् दण्ड्य इति। त्वं नाम दण्डभयाद्भगवन्तं दर्शनायोपसंक्रान्तः। एवं भदन्तानन्द। अथायुष्मानानन्दो रोचं मल्लमहामात्रमादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्। अयं भदन्त रोचो मल्लमहामात्रो न बुद्धेऽभिप्रसन्नो न धर्मे न संघेऽभिप्रसन्नः। साध्वस्य भगवांस्तथा धर्मं देशयेद् यथैष बुद्धेऽभिप्रसीदेद् धर्मे संघे अभिप्रसीदेदिति। अधिवासयति भगवानायुष्मत आनन्दस्य तूष्णींभावेन। अथ भगवता रोचस्य महामात्रस्य तादृशी धर्मदेशना कृता यां श्रुत्वा रोचो मल्लमहामात्रो बुद्धेऽभिप्रसन्नो धर्मे संघेऽभिप्रसन्नः। अथ रोचो मल्लमहामात्रः उत्थायासनादेकांसमुत्तरासंगं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेन। निमन्त्रितोऽस्मि रोच तत्प्रथमतः पापेयैर्मल्लैः। अधिवासयतु मे भगवानहं तथा करिष्यामि[1] यथा पापेया मल्ला अनुज्ञास्यन्ति। सचेत्ते रोच पापेया मल्ला अनुज्ञास्यन्ति एवं तेऽहमधिवासयामि। अथ रोचो मल्लमहामात्रो भगवतः पादौ शिरसा वन्दित्वोत्थायासनात् प्रक्रान्तो येन पापेया मल्लास्तेनोपसंक्रान्तः। उपसंक्रम्य पापेयान् मल्लानिदमवोचत्। आगमयन्तु तावद् भवन्तो यावदहं तत्प्रथमतरं भगवन्तं भोजये भिक्षुसंघं च। पश्चाद्युष्माकमपि

1 Tib. 73b, l. 6: བགྱིད་དོ།

न दुष्करं भविष्यति भगवन्तं भोजयितुं भिक्षुसंघं च। ते कथयन्ति। अस्माभिस्तत्प्रथमतरं बुद्धप्रमुखो भिक्षुसंघ उपनिमन्त्रितो न वयमनुजानीम इति। स कथयति। यदि नानुजानीथ एकं खाद्यकं चारयामि पानकं चेति। तत्र ये श्राद्धास्ते कथयन्ति। भवन्त अश्राद्ध एषः। अनुजानीमः सचेत् संघगता तेन दक्षिणा प्रतिष्ठापिता भवति। तैरनुज्ञातम्। ततस्तेन शिल्पिन आहूय उक्ताः। भवन्तस्तादृशं खाद्यकं सज्जीकुरुत येनैकेनैव पर्याप्तिर्भवति अहं सर्वोपकरणानि ददामीति। तेन नानासुगन्धिद्रव्यादिसंयुतान्युपकरणानि दत्तानि। तैर्नानासुगन्धिद्रव्यपरिपूर्णं खाद्यकं कृतम्। येनैकेनैवैकस्य पर्याप्तिर्भवति। अथ पापेया मल्लास्तामेव रात्रिं शुचिप्रणीतं खादनीयभोजनीयं समुपानीय पूर्ववद्यावत्पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णाः। ततो रोचो मल्लमहामात्रः खाद्यकं चारयितुमारब्धः पानकं च। भिक्षवः कौकृत्येन न परिभुञ्जन्ति। भगवानाह। दानपतिरवलोकयितव्य इति। भिक्षुभिः पापेया मल्ला अवलोकिताः। कथयन्ति। आर्या लक्षिता वयं रोचेन मल्लमहामात्रेण। प्रतिगृह्णीध्वमिति। ततो रोचेन मल्लमहामात्रेण खाद्यकं चारितम्। तेनैव भिक्षूणां पर्याप्तिर्जाता। भगवान् दक्षिणादेशनां कृत्वा प्रक्रान्तः। पापेयानां मल्लानामसावाहारः परिभोगं न गतः।

अपरस्मिन्दिवसे भिक्षवः पिण्डपातं प्रविष्टाः। ब्राह्मणगृहपतिभिरुच्यन्ते। एहि बुद्ध एहि धर्म एहि संघ इदं गृहाणेति।

भिक्षवः कौकृत्येन प्रतिगृह्णन्ति। भगवानाह। प्रष्टव्यः किं ममानुप्रयच्छथ आहोस्विद् योऽसौ भगवान् द्विपदानामग्र इति। यदि कथयन्ति योऽसौ भगवान्द्विपदानामग्र इति। न स्वीकर्तव्यम्। अथ कथयन्ति। त्वमेवास्माकं बुद्ध इति प्रतिग्रहीतव्यम्। नात्र कौकृत्यं करणीयम्। एवं धर्मे वक्तव्यं योऽसौ विरागाणामग्र इति। संघे वक्तव्यं योऽसौ गणानामग्र इति। विस्तरेण योजयितव्यम्।

श्रावस्त्यां निदानम्। अन्यतमेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघो जेन्ताकेनोपनिमंत्रितः। तेन खलु समयेनायुष्मान् स्वातिर्नवागतस्तरुणो[1]ऽचिरप्रव्रजितः अचिरागत इमं धर्मविनयम्। स संलक्षयति। उक्तं भगवता यैश्चाल्पं दत्तं यैश्च प्रभूतं दत्तं यैश्च प्रणीतं दत्तं यैश्चात्तमनस्कैः परिकर्म कृतं यैश्च प्रसन्नचित्तैरभ्यनुमोदितं सर्वे ते पुण्यस्य भागिनो भवन्ति। यत्त्वहं परिकर्म कुर्यामिति। स काष्ठं पाटयितुमारब्धो यावदन्यतमस्मात्पूतिदारुसुषिरान्निष्क्रम्याशीविषेण दक्षिणे पादाङ्गुष्ठे दष्टः। स विषेण संमूर्छितो भूमौ पतितो लाला वाहयति मुखं च विभण्डयति अक्षिणी च सम्परिवर्तयति। स तथा विह्वलो ब्राह्मणगृहपतिभिर्दृष्टः। ते कथयन्ति। भवन्तः कतरस्यायं गृहपतेः पुत्र इति। अपरैः समाख्यातम्। अमुकस्य इति। ते कथयन्ति। अनाथानां श्रमणशाक्यपुत्रीयाणां मध्ये प्रव्रजितः। यदि न प्रव्रजितोऽभविष्यत् ज्ञातिभिरस्य चिकित्सा कारिता अभविष्यदिति। एतत्प्रकरणं भिक्षवो भगवत

1 Tib. 75a, l. 5.

आरोचयन्ति। भगवानाह। वैद्यं पृष्ट्वा चिकित्सा कर्तव्येति। भिक्षुभिर्वैद्यः पृष्टः। स कथयति। आर्या विकृतभोजनमनुप्रयच्छतेति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। दातव्यं वैद्योपदेशेनेति। भिक्षवो न जानते कीदृशं विकृतभोजनमिति। तैर्वैद्यः पृष्टः। स कथयति। आर्या युष्माकमेव शास्ता सर्वज्ञो भगवान्सर्वदर्शी स एव ज्ञास्यतीति। भिक्षवो भगवत आरोचयन्ति। भगवानाह। विकृतभोजनं भिक्षव उच्चारः प्रस्रावश्छायिका मृत्तिका च। तत्र उच्चारः अचिरजातकानां वत्सकानां तेषामेव च प्रस्रावः। छायिका[1] पञ्चानां वृक्षाणाम्। काञ्चनस्य [2]कमीबलस्याश्वत्थस्योदुम्बरस्य न्यग्रोधस्य। मृत्तिका पृथिव्यां चतुरङ्गुलमपनीयोद्धर्तव्या इति विकृतभोजनमिति।

ततो भिक्षुभिरायुष्मतः स्वातेर्विकृतभोजनं दत्तम्। तथापि न स्वस्थीभवति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। शक्ष्यसि त्वमानन्द ममान्तिकान्महामायूरीं विद्यामुद्गृह्य पर्यवाप्य स्वातेर्भिक्षो रक्षां कर्तुं परित्राणं परिग्रहं विषदूषणं दण्डपरिहारं विषनाशनं सीमाबन्धं धरणीबन्धं च। भाषतां भगवान् श्रोष्यामि। अथ भगवांस्तस्यां वेलायामिमां महामायूरीं विद्यां भाषते स्म।

1 Tib. 76a, l. 3: ཐལ་བ །=भस्म।

2 Tib. 76a, l. 3: ཀ་ཙི་ད་ཀ །

नमो बुद्धाय नमो धर्माय नमः संघाय।

तद्यथा अमले विमले निर्मले मंगले हिरण्ये हिरण्यगर्भे भद्रे सुभद्रे समन्तभद्रे श्रीभद्रे सर्वार्थसाधनि परमार्थसाधनि सर्वानर्थप्रशमनि सर्वमङ्गलसाधनि मनसे महामानसे अच्युते अद्‌भुते अत्यद्‌भुते मुक्ते मोचनि मोक्षणि। अरजे विरजे अमृते अमरे [अमरणि] ब्रह्मे ब्रह्मस्वरे पूर्णे पूर्णमनोरथे मुक्ते जीवते रक्ष स्वातिं सर्वोपद्रवभयरोगेभ्यः स्वाहा।

एवं भदन्तेत्यायुष्मानानन्दो भगवतोऽन्तिकान्महामायूरीं विद्यामुद्‌गृह्य पर्यवाप्य स्वातेर्भिक्षोः स्वस्त्ययनं कृतम्। निर्विषश्च संवृत्तो यथा पौराणः।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। आश्चर्यं भगवन् यावच्च भगवता महामायूरी विद्या उपकरा बहुकरा च। न भिक्षव एतर्हि यथा ममातीतेऽप्यध्वन्यक्षणप्रतिपन्नस्य विनिपतितशरीरस्यापि महामायूरी विद्याराजा उपकरा बहुकरा च। तच्छ्रूयताम्।

भूतपूर्वं भिक्षवो हिमवति पर्वतराजे दक्षिणे पार्श्वे सुवर्णावभासो नाम मयूरराजः प्रतिवसति स्म। सोऽनया महामायूर्या विद्यया काल्यं स्वस्त्ययनं कृत्वा दिवा स्वस्त्ययनेन विहरति। सोऽयं स्वस्त्ययनं कृत्वा रात्रौ स्वस्त्ययनेन विहरति। सोऽपरेण समयेन संबहुलाभिर्वनमयूरीभिः सार्धमारामेणाराममुद्यानेनोद्यानं पर्वतपार्श्वेण पर्वतपार्श्वमत्यर्थं कामरागरक्तः कामेऽनुगृद्धो ग्रथितो मूर्छितो मदमत्तः प्रमूढः प्रमूर्छितः

प्रविचरन्प्रमादादन्यतरं पर्वतविवरमनुप्रविष्टः। स तत्र दीर्घरात्रं प्रत्यर्थिकैः प्रत्यमित्रैर्हिंसकैरवतारप्रेक्षिभिर्मयूरपाशैर्बद्धः। सोऽप्यत्र मध्यगतः प्रमूढः स्मृतिं च लब्ध्वा इमामेव महामायूरीं विद्यां मनस्यकार्षीत्। तद्यथा अमले विमले निर्मले मङ्गल्ये हिरण्ये हिरण्यगर्भे भद्रे सुभद्रे समन्तभद्रे श्रीभद्रे सर्वार्थसाधनि परमार्थसाधनि सर्वानर्थप्रशमनि सर्वमङ्गल्यसाधनि मनसि मानसि महामानसि अच्युते अद्भुते अत्यद्भुते मुक्ते मोचनि मोक्षणि अरजे विरजे अमरे अमृते [अमरणि] ब्रह्मे ब्रह्मस्वरे पूर्णे पूर्णमनोरथे मुक्ते जीवते रक्ष मां सर्वोपद्रवेभ्यः स्वाहा।

स मयूरपाशांश्छित्त्वा निष्पलानः। किं मन्यध्वे भिक्षवो योऽसौ सुवर्णावभासो नाम मयूरराजस्तेन कालेन तेन समयेन। तदापि मम महामायूरी विद्या उपकरा च बहुकरा च एतर्ह्यपि मम महामायूरी विद्या उपकरा च बहुकरा चेति। पश्य भदन्त यावच्च भगवतः स्वातेर्भिक्षोर्विद्यया स्वस्त्ययनं कृतम्। न भिक्षव एतर्हि यथातीतेऽप्यध्वनि। तच्छ्रूयताम्।

भूतपूर्वं भिक्षवो वाराणस्यां नगर्यां नागमण्डलिकोऽन्यतमः क्षत्रियदारकः सर्पेण दष्टः। स कालगतः। नागमण्डलिकेन विद्यया तस्य स्वास्थ्यं कृतम्। किं मन्यध्वे भिक्षवो योऽसौ नागमण्डलिकः अहं स तेन कालेन तेन समयेन। योऽसौ दारकः स्वातिर्भिक्षुस्तेन कालेन तेन समयेन।

भैषज्यवस्तु समाप्तम्॥

# INDEX